| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्रीहरिवंशांतर्गत भविष्यपर्व | शौनक | ज्योतिष | अपूर्ण | | 5/15 | 125 | संस्कृत | कागज | | | | |

M-2988

श्रीगणेशायनमः जनमेजयस्य १ २ ३ ४ ५ ६ ७ अन्वगच्छत् गर्भिण्येवेत्यर्थः ८ ९ १० ११ निघृष्टैःकृतचिह्नौ १२
अजः छागः तद्वत् श्यामौ समारूढौ तथैवकृष्णरूपवंतावित्यर्थः द्विजौ पार्श्वौ १३ १४ वेमकोनामस्वर्गस्थः कश्चिदृषिः तस्यशालायांगृहेद्विजाभ्यांकौशिकपिप्प



श्रीगोपालकृष्णायनमः शौनकउवाच जनमेजयस्यके पुत्राःपठ्यंतेलौमहर्षणे कस्मिन्प्रतिष्ठितोवंशः पांडवानांमहात्मनाम् १ एतदिच्छाम्यहंश्रोतुंपरंकौतूहलंहिमे त्वन्तःकथयतःसर्ववेदम्यहंततस्त्रिस्फुटम् २ सौतिरुवाच पारीक्षितस्यकाश्यायांद्वौपुत्रौसंबभूवतुः चंद्रापीडश्चनृपतिःसूर्यापीडश्चमोक्षवित् ३ चंद्रापीडस्यपुत्राणांशतमुत्तमधन्विनाम् जानमेजयइत्येवंक्षात्रंभुविपरिश्रुतम् ४ तेषांश्रेष्ठस्तुराजासीत्पुरेवारणसाव्हये सत्यकर्णोमहाबाहुर्यज्वाविपुलदक्षिणः ५ सत्यकर्णस्यदायादःश्वेतकर्णःप्रतापवान् अपुत्रःसतुधर्मात्माप्रविवेशतपोवनम् ६ तस्माद्वनगताद्गर्भं यादवीप्रत्यपद्यत सुचारोर्दुहितासुभ्रूर्मालिनीम्मालिनी ७ सतुजन्मनिगर्भस्यश्वेतकर्णःप्रजेश्वरम् अन्वगच्छद्यथापूर्वंमहाप्रस्थानमच्युतम् ८ साहष्ट्वासंप्रयातंतंमालिनीपृष्ठतोऽन्वयात् पथिसासुषुवेसाध्वीकुमारंराजीवलोचनम् ९ कुमारंतंपरित्यज्यभर्त्तारंचान्वगच्छत पतिव्रतामहाभागाद्रौपदीवपुरापतीन् १० सतुराजकुमारोसौगिरिकुंजरुरोदह छायार्थंतस्यमेघास्तुप्रादुरासन्समंततः ११ श्रविष्ठायाश्चपुत्रौद्वौपिप्पलादिश्चकौशिकः दृष्ट्वाकृपान्वितौगृह्यतंप्रक्षालयतांजलैः निघृष्टौतस्यतौपार्श्वौशिलायांरुधिरस्तुतौ अजश्यामौतुपार्श्वौतावुभावपिसमाहितौ तथैवतुसमारूढौअजपार्श्वस्ततोऽभवत् १३ ततोजपार्श्वइतितौचक्रातेतस्यनामह सतुवेमकशालायांद्विजाभ्यामभिवर्धितः १४ वेमकस्यतुभार्यातंसुषुवेहस्तुत्रकारणात् वेमक्याःसतुपुत्रोऽभूद्ब्राह्मणौसचिवौचतौ १५ तेषांपुत्राश्चपौत्राश्चयुगपत्तुल्यजीविनः सएषपौरवोवंशःपांडवानांप्रतिष्ठितः १६ श्लोकोपिचात्रगीतोयंनाहुषेणययातिना जरासंक्रमणेपूर्वंभृशंप्रीतेनधीमता १७ आचंद्रार्कग्रहाभूमिर्भवेदपिनसंशयः अपौरवानतुमहीभविष्यतिकदाचन १८ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिप्रथमोऽध्यायः १ शौनकउवाच उक्तोयंहरिवंशस्ते पर्वाणिनिखिलानिच यथापुरोक्तानितथाव्यासशिष्येणधीमता १ तत्कथ्यमानममितमितिहाससमन्वितं प्रीणात्यस्मानमृतवत्सर्वपापविनाशनम् २

लादाभ्याम् १५ तेषांअजपार्श्वपिप्पलादकौशिकानाम् १६ १७ १८ इतिहरिवंशेभविष्यपर्वणिटीकायांप्रथमोऽध्यायः १ १ २ ६

३ ४ ५ ६ ७ वेदसंहिताः वेदनिबद्धाः ८ ९ मेममनिमेषमात्रमपि संवत्सरोपिनेमिषमात्रमिवगतः अपरिवार्यै १० ११ १२ १३ दुःसहानां
अजेयानां १४ १५ १६ आडीजलचरः पक्षिविशेषः तद्रूपेणवसिष्ठः बकरूपेणविश्वामित्रश्च ऋषित्वाल्लज्जयाप्राकट्येनयुद्धं कर्तुमशक्तौतयोर्युद्धमाडीब

स्तरवश्राव्यतयाधीरमनोल्हादयतीवनः जनमेजयस्तनृपतिःश्रुत्वाचाख्यानमुत्तमम् सौतेकिमकरोत्पश्चात्सर्पसत्रादनंतरम् ३
सौतिरुवाच जनमेजयस्तुसनृपःश्रुत्वाचाख्यानमुत्तमं यदारब्धतदाख्यास्यसर्पसत्रादनंतरम् तस्मिन्सत्रेसमाप्तेयराजापा
रीक्षितस्तदा ४ यष्टुंसवाजिमेधेनसंभारानुपचक्रमे ऋत्विक्पुरोहिताचार्यानाहूयेदमुवाचह यक्ष्येहंवाजिमेधेनहयउत्सृज्यता
मपि ५ ततोस्यविज्ञायचिकीर्षितंतद्दाकृष्णोमहात्मासहसाजगाम पारीक्षितंद्रष्टुमदीनसत्वंद्वैपायनःसर्वपरावरज्ञः ६ पारीक्षि
तस्तनृपतिर्दृष्ट्वातमृषिमागतम् अर्घ्यपाद्यासनंकृत्वापूजयामासशास्त्रतः ७ तौचोपविष्टावभितःसदस्यास्तस्यशौनक कथाबहु
विधाश्चित्राश्चक्रातेवेदसंहिताः ८ ततःकथांतेनृपतिर्नोदयामासतंमुनिम् पितामहंपांडवानांआत्मनःप्रपितामहम् ९ महाभारत
माख्यानंबह्वर्थंश्रुतिविस्तरम् निमेषमात्रमपिमेस्तरवश्रव्यतयागतम् १० विभूतिविस्तरकरंसर्वेषांवैयशस्करम् त्वयास्तविहितं
ब्रह्मन्नृशंरवेक्षीरमिवाहितम् ११ अमृतेनतुतृप्तिःस्याद्यथास्वर्गस्तरवेनच तथातृप्तिंनगच्छामिश्रुत्वेमांभारतींकथाम् १२ अनुमा
न्यतुसर्वज्ञंपृच्छामिभगवन्नहम् हेतुःकुरूणांनाशस्यराजसूयोमतोमम १३ दुःसहानांयथाध्वंसोराजन्यानामुपप्लवे राजसूयंत
थामन्येयुद्धार्थमुपकल्पितम् १४ राजसूयस्तुसोमेनसूयलेपूर्वमाहृतः तस्यांतेसुमहद्युद्धमभूवत्तारकामयम् १५ आहृतोवरुणेना
थतस्यांतेस्तमहाक्रतोः देवासुरंमहायुद्धंसर्वभूतक्षयावहम् १६ हरिश्चंद्रस्यराजर्षेःक्रतुमेनमुपाहरत् तत्राप्याडीबकंनामयुद्धंक्ष
त्रियनाशनम् १७ ततोनंतरमार्गेणपांडवेनातिदुस्तरः महाभारतआरंभःसंभृतोग्निरिवक्रतुः १८ तदस्यमूलंयुद्धस्यलोकक्षयक
रस्यतु राजसूयोमहायज्ञःकिमर्थंननिवारितः १९ राजसूयोह्यसंहार्योयज्ञांगैश्चदुरत्ययैः मिथ्याप्रणीतेयज्ञांगेप्रजानांसंक्षयोध्रु
वः २० भवानपिचसर्वेषांपूर्वेषांनःपितामहः अतीतानागतज्ञश्चनाथश्चादिकरश्चनः २१ तेकथंभवतानेत्राबुद्धिमंतश्चुतानयात्
अनाथाह्यपराध्यंतेकुनेतारश्चमानवाः २२

कंनामतन्निमित्तम् उभयपक्षपातिनांक्षत्रियाणांनाशो वृत्तइत्यर्थः १७ महाभारतेभारतयु
द्धनिमित्तआरम्यतइत्यारंभः १८ १९ असंहार्यःसर्वांगोपेतःकर्तुमशक्यः २० २१ नेत्रागुरुणा २२ ६९ ६९ ६९

२३ विहितागतिः विहितांगतिम् २४ २५ संरंभात् भयात् आरंभात् उत्साहात् पौरुषे पुरुषवंशे २६ तेनभावेनमहत्वकारणेनबुद्धिपूर्वकद्वेषादित्यर्थः २७ २८
२९ तस्यक्रतोः संस्थासमाप्तिस्तदर्थंकृतमिदंभाविकालुष्यम् कालस्यइच्छयेतिशेषः ३० तत्प्रणेयंकालाधीनम् ३१ ३२ ३३ ३४ ३५ द्विजः पक्षी ३६ ३७



व्यासउवाच        कालेनविपरीतास्तेतवपूर्वपितामहाः नमांभविष्यंपृच्छंतिनचापृष्टोब्रवीम्यहम् २३ सामर्थ्यंचनपश्यामि भविष्यस्यनिवर्तने परिहर्तुंनशक्याहिकालेनविहितागतिः २४ त्वयात्विदमहंपृष्टोवक्ष्याम्यागंतुभावियत् अवश्यंबलवान्कालःश्रुत्वापिनकरिष्यसि २५ नसंभारान्नचारंभान्नवैस्थास्यसिपौरुषे लेखाहिकाललिखितासर्वथादुरतिक्रमा २६ अश्वमेधःक्रतुःश्रेष्ठःक्षत्रियाणांपरिश्रुतः तेनभावेनतेयज्ञंवासवोधर्षयिष्यति २७ यदितच्छक्यतेराजन्परिहर्तुंकथंचन दैवंपुरुषकारेणमायजेथाश्वतंक्रतुम् २८ नचापराधःशक्रस्यनोपाध्यायगणस्यते नचवायजमानस्यकालेनदुरतिक्रमः २९ तस्यसंस्थाकृतमिदंकालस्यपरमेष्ठिनः यथाहृष्टंप्रजासर्गंगमिष्यंतियुगक्षये ३० तथायज्ञफलानांचविक्रेतारोद्विजातयः तत्प्रणेयंनिबोधत्वत्रैलोक्यंसचराचरम् ३१ जनमेजयउवाच        निवृत्तावश्वमेधस्यकिंनिमित्तंभविष्यति श्रुत्वापरिहरिष्यामिभगवन्यदिमन्यसे ३२ व्यासउवाच निमित्तंभवितातत्रब्रह्मकोपकृतंभभो यतेथाःपरिहर्तुंत्वमित्येतद्भद्रमस्तुते ३३ त्वयाहृतंक्रतुंचैववाजिमेधंपरंतप क्षत्रियानाहरिष्यंतियावद्भूमिर्धरिष्यति ३४ जनमेजयउवाच        निवृत्तावश्वमेधस्यब्रह्मशापाग्नितेजसा अहंनिमित्तमितिमेभयंतीव्रंतुजायते ३५ कथंह्यकीर्त्यासुज्येतस्कृतीमद्विधोजनः लोकानुत्सहतेगंतुंखंसपाशइवद्विजः ३६ यथाह्यनागतमिदंदृष्टमंत्रःप्रणाशनम् यद्यस्तिपुनरावृत्तिर्यज्ञस्याश्वासयस्वमाम् ३७ व्यासउवाच        उपात्तयज्ञोदेवेषुब्राह्मणेषूपपत्स्यते तेजसाव्याहृतंतेजस्तेजस्येवावतिष्ठते ३८ औद्भिज्जोभविताकश्चित्सेनानीःकाश्यपोद्विजः अश्वमेधंकलियुगेपुनःप्रत्याहरिष्यति ३९ तद्युगेतत्कुलीनश्चराजसूयमपिक्रतुम् आहरिष्यतिराजेंद्रश्वेतग्रहमिवांतकः ४० यथाबलंमनुष्याणांकर्तॄणांदास्यतेफलम् युगांतद्वारमृषिभिःसंवृतंविचरिष्यति ४१

उपात्तउपसंहृतोयज्ञोश्वमेधः देवादिषुज्ञानरूपेणावस्थास्यति ३८ उद्भिदजायतइत्यौद्भिज्जःभूबिलस्थोयोगीरवन्यमानायांभूविप्रकटीभविष्यतीत्यर्थः ३९ श्वेतग्रहमुत्पातविशेषः अंतकः मलपकालः ४० बलंश्रद्धादिरूपंफलंदास्यतेक्रतुरितिशेषः संवृतंगोपितंविचरिष्यतिजनः ४१        श्रीमद्वेदव्यासायनमः        ५        ५        ५        ५

तदाप्रभृति युगांतमारभ्य प्राणाइंद्रियाणिपुराकृतीः शिष्टाचारान्वर्तनेषुआचारेषुवृत्तांतः पूर्ववृत्तंननितरांवर्तिष्यते ४२ सूक्ष्मोल्पोपिधर्मः महोदर्को
महाफलः दुस्तरोविघ्नबाहुल्यात् ४३ ४४ इतिश्रीमन्महाभारतेहरिवंशेभविष्यपर्वणिटीकायांद्वितीयोऽध्यायः २ आसन्नं यदियस्मात् कालं-
मोक्षस्यनविद्महे तस्माद्द्वापरः धर्माधर्मसाम्यवान् संविद्धोअधर्माधिक्यात् दूषितोयेन तंयुगांतंयुगानांअंतेभवंकलिंश्रोतुंस्पृहयामि १ तत्रस्पृहाहेतुमा-

तदाप्रभृतिहास्यंतिनृणांप्राणाःपुराकृतीः ननिवर्तिष्यतेलोकेवृत्तांतावर्तनेष्विह ४२ तदासूक्ष्मोमहोदर्कोदुस्तरोदानमूलवान् चा
तुराश्रम्यशिथिलोधर्मःप्रविचलिष्यति ४३ तदाह्यल्पेनतपसासिद्धिंप्राप्स्यंतिमानवाः धन्याधर्मंचरिष्यंतियुगांतेजनमेजय ४४
इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिद्वितीयोऽध्यायः २ जनमेजयउवाच आसन्नंविप्रकृष्टंवायदिकालंनवि
द्महे तस्माद्द्वापरसंविद्धंयुगांतंस्पृहयाम्यहम् १ प्राप्तावयंतुतत्कालमनयाधर्मतृष्णया आदद्यात्परमंधर्मंसुखमल्पेनकर्मणा २
शौनकउवाच त्रासमुद्वेगकरणंयुगांतंसमुपस्थितम् प्रनष्टधर्मंधर्मज्ञनिमित्तैर्वक्तुमर्हसि ३ सौतिरुवाच पृष्टएवंभवि
ष्यस्यगतिंतत्त्वेनचिंतयन् युगांतेसर्वभूतानांभगवानब्रवीत्तदा ४ व्यासउवाच अरक्षितारोहर्तारोबलिभागस्यपार्थिवाः
युगांतेप्रभविष्यंतिस्वरक्षणपरायणाः ५ अक्षत्रियाश्चराजानोविप्राःशूद्रोपजीविनः शूद्राश्चब्राह्मणाचाराभविष्यंतियुगक्षये ६
कांडस्पृष्टाःश्रोत्रियाश्चनिष्क्रियाणिहवींष्यथ एकपंक्त्यामशिष्यंतियुगांतेजनमेजय ७ शिल्पवंतोनृतपरानरामद्यामिषप्रियाः मि
त्रभार्याभविष्यंतियुगांतेजनमेजय ८ राजवृत्तिस्थिताश्चौराराजानश्चौरशीलिनः भृत्याश्चानिर्दिष्टभुजोभविष्यंतियुगक्षये ९
धनानिश्लाघनीयानिसतांवृत्तमपूजितम् अकुत्सनाचपतितेभविष्यतियुगक्षये १० प्रनष्टचेतनामर्त्यामुक्तकेशाविचूलिनः ऊनषो
डशवर्षाश्चप्रजास्यंतिनराःसदा ११ अट्टशूलाजनपदाःशिवशूलाश्चतुष्पथाः प्रमदाःकेशशूलाश्चभविष्यंतियुगक्षये १२ सर्वेब्रह्मवदि
ष्यंतिसर्वेवाजसनेयिनः शूद्राभोवादिनश्चैवभविष्यंतियुगक्षये १३

हप्राप्ताइति अल्पायासेनमहत्फलंभवतीतिलोभादस्माभिःकलौजन्मप्रार्थितमित्यर्थः २ ३ ४ ५ ६ कांडस्पृष्टाःबाणधराःक्षत्रवृत्तयोब्राह्मणाइत्यर्थः निष्क्रियाणिपं
चयज्ञहीनानि ७ ८ ९ अकुत्सनाअनिंदा १० चेतनाधर्माधर्मस्वरूपबोधः मुक्तकेशाःविधवाः विचूलिनः संन्यासिनः प्रजास्यंति अन्योन्यंमिथुनीभूयप्रजांजनयिष्यंति
११ अट्टशूलाःअन्नविक्रयिणःशिवशूलाःवेदविक्रयिणः केशशूलाभगविक्रयिण्यः १२ सर्वेब्रह्मवादच्छलेनकर्मभ्रष्टाभविष्यंतीत्यर्थः सर्वेवाजसनेयिनः शाखांतरलो-
पात् तेनवेदत्रयसाध्योयज्ञउत्सन्नोभविष्यतीतिभावः इदानीमेवपश्चिमदेशेतथादर्शनात् भोइतिपूज्यवादोयेषुतेभोवादिनः १३ ५ ५

भा॰ ह॰ टी॰ ३

१४ शुक्लदंताः मांसाशनत्यागात् अन्यथा रक्तदंतत्वं स्यात् अंजिताक्षाः सूक्ष्मदृष्टयः शाक्यमतं बुद्धमतं चोपजीवंति ते वेददूषकानास्तिका इत्यर्थः १५ श्वापदाः
हिंस्राः वृकव्याघ्रादयः स्वादूनां उत्तमरसादीनां १६ अंत्याः म्लेच्छाः मध्याः कुरुपंचालाः तत्रस्थाश्च म्लेच्छदेशे वासं करिष्यंतीत्यर्थः यथेति नीचमार्गानुसारिण इत्य
र्थः १७ दम्याः हलशकटादिवहनयोग्याः चित्रवर्षी हले योजितस्य बलीवर्दस्य एकं शृंगमार्द्रं एकं शुष्कमित्येवं वर्षिष्यतीत्यर्थः १८ चौरयानाः मुष्णंतः यत्किंचि
द्व्यसनदुर्गताः दरिद्राः १९ ऊषार्कबहुलाक्षारमृत्तिकया प्रस्वेदभूयिष्ठा बीजनाशिनीत्यर्थः नगरांतराइति वनांतरेषु चोरभयात् वक्रमार्गेपि नगराश्चापयोगेः पां

तपोयज्ञफलानां च विक्रेतारो द्विजातयः ऋतवश्च भविष्यंति विपरीता युगक्षये १४ शुक्लदंतांजिताक्षाश्च मुंडाः काषायवाससः शूद्रा
धर्मं चरिष्यंति शाक्यबुद्धोपजीविनः १५ श्वापदप्रचुरत्वं च गवां चैव परिक्षयः स्वादूनां विनिवृत्तिश्च विद्याद्दंतगते युगे १६ अंत्या मध्ये
निवत्स्यंति मध्याश्चांतनिवासिनः यथा निम्नं प्रजाः सर्वा गमिष्यंति युगक्षये १७ तथा द्विहायना दम्यास्तथा पल्वलकर्षकाः चित्रवर्षी
च पर्जन्यो युगे क्षीणे भविष्यति १८ सर्वे चौरकुले जाताश्चौरयाना परस्परम् स्वल्पेनाढ्या भविष्यंति यत्किंचित्प्राप्य दुर्गताः १९ न ते धर्मं क
रिष्यंति मानवा निर्गते युगे ऊषार्कबहुला भूमिः पंथानस्तस्करावृताः २० सर्वे वाणिजकाश्चैव भविष्यंति कलौ युगे पितृदत्तानि देयानि विभ
जंते कृतास्तदा २१ हरणाय प्रयत्स्यंते लोभानृतविरोधिताः २२ सौकुमार्ये तथा रूपे रत्ने चोपक्षयं गते भविष्यंति युगांते च नार्यः केशैरलं
कृताः २३ निर्विहारस्य भीतस्य गृहस्थस्य भविष्यति युगांते समनुप्राप्ते नान्या भार्यासमा गतिः २४ कुशीला नार्य भूयिष्ठं वृथा रूपसम-
न्वितम् पुरुषाल्पं बहुस्त्रीकं तद्युगांतस्य लक्षणम् २५ बहुयाचनको लोको न दास्यंति परस्परम् अविचार्य ग्रहीष्यंति दानं वर्णांतरात्तथा
२६ राजचौराग्निदंडार्तो जनः क्षयमुपैष्यति सस्यनिष्पत्तिरफला तरुणा वृद्धशीलिनः ईहयासुखिनो लोका भविष्यंति युगक्षये २७ वर्षा
स्कवाताः पुरुषा नीचाः शर्करवर्षिणः संदिग्धः परलोकश्च भविष्यति युगक्षये २८ आत्मानश्च दुराचारा ब्रह्मदूषणतत्पराः आत्मानं ब
हु मन्यंते मन्युरेवाभ्यया द्विजान् २९ वैश्याचाराश्च राजन्या धनधान्योपजीविनः युगापक्रमणे पूर्वे भविष्यंति द्विजातयः ३० अन-
वृत्ताः प्रपत्स्यंते समयाः शपथास्तथा ऋणं सविनयभ्रंशं युगे क्षीणे भविष्यति ३१

थैर्गंतव्यमित्यर्थः २० देयानि अलंकारादीनि शास्त्रतः अ
विभाज्यान्यपि विभजंते २१ लोभानृताभ्यां विरोधिताः सविरोधाः २२ सौकुमार्ये लावण्ये रत्ने अलंकारादौ २३ निर्विहारस्य स्रक्चंदनदिव्यास्तरणादिभोग
सामग्रीविहाररहितस्य भूतस्य रूपमात्रेण स्थितस्य २४ २५ २६ ईहया तृष्णया असुखिनः २७ २८ २९ युगापक्रमणे धर्ममर्यादाभंगे भविष्यंति प्रवर्त
यिष्यंति ३० समयाः सांकेतिकाः धर्माः सविनयभ्रंशं उत्तमेभ्यो विभ्रंशो यस्य तथा भविष्यति किमुत नीचेभ्यः ३१ ५ ५

स्त्वभावतः स्वेच्छयाशास्त्रार्थंवदिष्यंति ३३ ३४ द्विजातयः क्षत्राणिननियोक्ष्यंतिधर्मइतिशेषः तत्रहेतुः चौरेति ३५ कुंडायांअमृतेजीवतिपत्यौजारजाता यांवृषाः रेतःसेक्तारःकुंडावृषाः नैकृतिकाः अनधिकारिणावपिजायापतीयज्ञंकरिष्यतइत्यर्थः अभक्षस्येतिच्छेदः ३६ ३७ गवेधुकः कुरुंभबीजाकारस्तृणधा

भविष्यत्यफलोहर्षः क्रोधश्चसफलोनृणाम् अजाश्चैवोपरोत्स्यंतेपयसोर्थेयुगक्षये ३२ अशास्त्रविदुषांपुंसामेवमेवस्वभावतः अप्रमाणंवदिष्यंति नीतिपंडितमानिनः ३३ शास्त्रोक्तस्याप्रवक्तारोभविष्यंतियुगक्षये सर्वेसर्वंद्विजानंतिवृद्धाननुपसेव्यवै ३४ नकश्चिदकविर्नामयुगांतेसमुपस्थिते नक्षत्राणिनियोक्ष्यंतिविकर्मस्थाद्विजातयः चौरप्रायाश्चराजानोयुगांतेपर्युपस्थिते ३५ कुंडावृषानैकृतिकाः सुरापाब्रह्मवादिनः अश्वमेधेनयक्ष्यंतियुगांतेजनमेजय अयाज्यान्याजयिष्यंतितथाभक्षस्यभक्षिणः ३६ ब्राह्मणाधनतृष्णार्तायुगांतेसमुपस्थिते भोशब्दमभिधास्यंतिनचकश्चित्पठिष्यति ३७ एकशंखास्तथानार्योगवेधुकपिनद्धिकाः नक्षत्राणिवियोगीनिविपरीतादिशस्तथा ३८ संध्यारागोथदिग्दाहोभविष्यत्यवरेयुगे पितृन्पुत्रानियोक्ष्यंतिवध्वःश्वश्रूश्चकर्म सु ३९ वियोनिषुचरिष्यंतिप्रमदासुनरास्तदा वाक्शरैस्तर्जयिष्यंतिगुरून्शिष्यास्तथैवच गुरवेषुचप्रयोक्ष्यंतिप्रमत्ताश्चनरास्त दा ४० अ कृताग्राणिभोक्ष्यंतिनराश्चैवाग्निहोत्रिणः भिक्षांबलिमदत्वाचभोक्ष्यंतिपुरुषाःस्वयम् ४१ पतीन्सुप्तान्वंचयित्वा गमिष्यंतिस्त्रियोन्यतः पुरुषाश्चप्रसुप्तासुभार्यासुचपरस्त्रियम् ४२ नाव्याधितोनाप्यरुजोजनःसर्वोभ्यसूयकः नकृतेप्रतिक र्ताचकालेक्षीणेभविष्यति ४३ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणितृतीयोऽध्यायः ३ जनमेजय उवाच एवंविलुलितेलोकेमनुष्याःकेनपालिताः निवत्स्यंतिकिमाचाराःकिमाहारविहारिणः १ किंकर्माणःकिमीहंतःकिंप्रमा णाःकिमायुषः कांचकाष्ठांसमासाद्यप्रपत्स्यंतिकृतंयुगम् २ व्यासउवाच अतऊर्ध्वंच्युतेधर्मेगुणहीनाःप्रजास्ततः शीलव्य सनमासाद्यप्राप्स्यंतेह्रासमायुषः ३ आयुर्हान्याबलग्लानिर्बलग्लान्याविवर्णता वैवर्ण्याद्व्याधिसंपीडानिर्वेदोव्याधिपीडनात् ४ निर्वेदादात्मसंबोधःसंबोधाद्धर्मशीलता एवंगत्वापरांकाष्ठांप्रपत्स्यंतिकृतंयुगम् ५

न्यविशेषस्तन्मयाः पिनद्धकाअलंकाराः येषांतेएतच्चगुंजादेरप्युपलक्षणं वियोगीनियथाशास्त्रंतत्तद्ग्रहसंयोगहीनानि ३८ ३९ वियोनिषुपश्वादिषुविभिन्नवर्णे षुवा ४० अग्रंग्रासचतुष्टयं अहुतंअदत्तंअग्रंयेषांतानिअन्नानिअकृताग्राणि ४१ ४२ अरुजोमनःपीडारहितः ४३ इतिह॰ तृतीयोध्यायः ३ एवंविलुलितेक लुषीकृते १ २ शीलव्यसनंधर्मनाशं ३ निर्वेदः देहादौवैराग्यं ४ आत्मसंबोधः विवेकोदयः एवंगत्वाधर्मशीलत्वात्चित्तशुद्धिज्ञानोत्पत्तिद्वारापरांकाष्ठांमोक्षदं ज्ञानंतदेवसर्वपापनाशात्कृतयुगम् ५

१४शुक्लदंताः मांसाशनत्यागात् अन्यथारक्तदंतत्वंस्यात् अंजिताक्षाः सूक्ष्मदृष्टयः शाक्यमतंबुद्धमतंचोपजीवंतितेवेददूषकानास्तिकाइत्यर्थः १५ श्वापदाः
हिंस्राः वृकव्याघ्रादयः स्वादूनांउत्तमरसादीनां १६ अंत्याः म्लेंछाः मध्याः कुरुपंचालाः तत्रस्थाश्चम्लेछदेशेवासंकरिष्यंतीत्यर्थः यथेतिनीचमार्गानुसारिणइत्य
र्थः १७ दम्याः हलशकटादिवहनयोग्याः चित्रवर्षीहलेयोजितस्यबलीवर्दस्य एकंशृंगमार्द्रएकंशुष्कमित्येवंवर्षिष्यतीत्यर्थः १८ चौरयानाः मुष्णंतः यत्किंचि
द्यसनदुर्गताः दरिद्राः १९ ऊषार्कबहुलाक्षारमृत्तिकयाप्ररवेदभूयिष्ठाबीजनाशिनीत्यर्थः नगरांतराइतिवनांतरेषुचोरभयात् वक्रमार्गेपिनगरान्वेषयोगेः पां

तपोयज्ञफलानांचविक्रेतारोद्विजातयः ऋतवश्चभविष्यंतिविपरीतायुगक्षये १४ शुक्लदंतांजिताक्षाश्चमुंडाःकाषायवाससः शूद्रा
धर्मंचरिष्यंतिशाक्यबुद्धोपजीविनः १५ श्वापदप्रचुरत्वंचगवांचैवपरिक्षयः स्वादूनांविनिवृत्तिश्चविद्यादंतगतेयुगे १६ अंत्यामध्ये
निवत्स्यंतिमध्याश्चांतनिवासिनः यथानिम्नंप्रजाःसर्वागमिष्यंतियुगक्षये १७ तथाद्विहायनादम्यास्तथापल्वलकर्षकाः चित्रवर्षी
चपर्जन्योयुगेक्षीणेभविष्यति १८ सर्वेचोरकुलेजाताश्चौरयानापरस्परम् स्वल्पेनाढ्याभविष्यंतियत्किंचित्प्राप्यदुर्गताः १९ नतेधर्मंक
रिष्यंतिमानवानिर्गतेयुगे ऊषार्कबहुलाभूमिःपंथानस्तस्करावृताः २० सर्वेवाणिजकाश्चैवभविष्यंतिकलौयुगे पितृदत्तानिदेयानिविभ
जंतेस्तृतास्तदा २१ हरणायप्रयत्स्यंतेलोभावृतविरोधिताः २२ सौकुमार्येतथारूपेरत्नेचोपक्षयंगते भविष्यंतियुगांतेचनार्यःकेशैरलं
कृताः २३ निर्विहारस्यभीतस्यगृहस्थस्यभविष्यति युगांतेसमनुप्राप्तेनान्याभार्यासमागतिः २४ कुशीलानार्यभूयिष्ठंवृथारूपसम-
न्वितम् पुरुषाल्पंबहुस्त्रीकंतद्युगांतस्यलक्षणम् २५ बहुयाचनकोलोकोनदास्यंतिपरस्परम् अविचार्यगृहीष्यंतिदानंवर्णांतरात्तथा
२६ राजचौराग्निदंडार्तोजनःक्षयमुपेष्यति सस्यनिष्पत्तिरफलातरुणावृद्धशीलिनः ईहयास्फुरिवनोलोकाभविष्यंतियुगक्षये २७ वर्षा
स्तुवाताःपुरुषानीचाःशर्करवर्षिणः संदिग्धःपरलोकश्चभविष्यतियुगक्षये २८ आत्मानश्चदुराचाराब्रह्मदूषणतत्पराः आत्मानंब
हुमन्यंतेमन्युरेवाभ्ययाद्द्विजान् २९ वैश्याचाराश्चराजन्याधनधान्योपजीविनः युगापक्रमणेपूर्वेभविष्यंतिद्विजातयः ३० अ-
प्रवृत्ताःप्रपत्स्यंतेसमयाःशपथास्तथा ऋणंसविनयभ्रंशंयुगेक्षीणेभविष्यति ३१

धैर्येगंतव्यमित्यर्थः २० देयानिअलंकारादीनि शास्त्रतः अ
विभाज्यान्यपिविभजंते २१ लोभानृताभ्यांविरोधिताःसविरोधाः २२ सौकुमार्यलावण्येरत्नेअलंकारादौ २३ निर्विहारस्यस्रक्चंदनदिव्यास्तरणादिभोग
सामग्रीविहाररत्तद्रहितस्यभूतस्यरूपमात्रेणस्थितस्य २४ २५ २६ ईहयातृष्णायाअस्फुरिवनः २७ २८ २९ युगापक्रमणेधर्ममर्यादाभंगेभविष्यंतिप्रवर्त
यिष्यंति ३० समयाःसांकेतिकाः धर्माः सविनयभ्रंशंउत्तमेभ्योविभ्रंशोयस्यतथाभविष्यतिकिंमुतनीचेभ्यः ३१ ५ ५

स्त्वभावतः स्वेच्छयाशास्त्रार्थंवदिष्यंति ३२ ३४ द्विजातयः क्षत्राणिननियोक्ष्यंतिधर्मइतिशेषः तत्रहेतुः चौरेति ३५ कुंडायांअमृतेजीवतिपत्यौजारजाता
यांवृषाः रेतःसेक्तारःकुंडाद्वृषाः नैकृतिकाः अनधिकारिणावपिजायापतीयज्ञंकरिष्यतइत्यर्थः अभक्षस्येतिच्छेदः ३६ ३७ गवेधुकः कुरुंभवीजाकारस्तृणधा

भविष्यत्यफलोहर्षः क्रोधश्चसफलोनृणाम् अजाश्चैवोपरोत्स्यंतेपयसोर्थेयुगक्षये ३२ अशास्त्रविदुषांपुंसामेवमेवस्वभावतः
अप्रमाणंवदिष्यंति नीतिंपंडितमानिनः ३३ शास्त्रोक्तस्याप्रवक्तारोभविष्यंतियुगक्षये सर्वेसर्वंहिजानंतिवृद्धाननुपसेव्यवै ३४
नकश्चिदकविर्नामयुगांतेसमुपस्थिते नक्षत्राणिनियोक्ष्यंतिविकर्मस्थाद्विजातयः चौरप्रायाश्चराजानोयुगांतेपर्युपस्थिते ३५ कुं
डाद्वृषानैकृतिकाः स्त्रापाब्रह्मवादिनः अश्वमेधेनयक्ष्यंतियुगांतेजनमेजय अयाज्यान्याजयिष्यंतितथाभक्षस्यभक्षिणः ३६
ब्राह्मणाधनतृष्णार्तायुगांतेसमुपस्थिते भोशब्दमभिधास्यंतिनचकश्चित्पठिष्यति ३७ एकशंखास्तथानार्योगवेधुकपिनद्धिकाः
नक्षत्राणिवियोगीनिविपरीतादिशस्तथा ३८ संध्यारागोथदिग्दाहोभविष्यत्यवरेयुगे पितॄन्पुत्रानियोक्ष्यंतिवध्वःश्वश्रूश्चकर्म
सु ३९ वियोनिषुचरिष्यंतिप्रमदासुनरास्तदा वाक्शरैस्तर्जयिष्यंतिगुरून्शिष्यास्तथैवच गुरवेषुचप्रयोक्ष्यंतिप्रमत्ताश्चनरास्त
दा ४० अकृताग्राणिभोक्ष्यंतिनराश्चैवाग्निहोत्रिणः भिक्षांबलिमदत्वाचभोक्ष्यंतिपुरुषाःस्वयम् ४१ पतीन्सुप्तान्वंचयित्वा
गमिष्यंतिस्त्रियोन्यतः पुरुषाश्चप्रसुप्तासुभार्यासुचपरस्त्रियम् ४२ नाव्याधितोनाप्यरुजोजनःसर्वोभ्यसूयकः नकृतेप्रतिक
र्ताचकालेक्षीणोभविष्यति ४३ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणितृतीयोऽध्यायः ३ जनमेजय
उवाच एवंविलुलितेलोकेमनुष्याःकेनपालिताः निवत्स्यंतिकिमाचाराःकिमाहारविहारिणः १ किंकर्माणःकिमीहंतःकिंप्रमा
णाःकिमायुषः कांचकाष्ठांसमासाद्यप्रपत्स्यंतिकृतंयुगम् २ व्यासउवाच अतऊर्ध्वंच्युतेधर्मेगुणहीनाःप्रजास्ततः शीलव्य
सनमासाद्यप्राप्स्यंतेह्रासमायुषः ३ आयुर्हान्याबलग्लानिर्बलग्लान्याविवर्णता वैवर्ण्याद्व्याधिसंपीडानिर्वेदोव्याधिपीडनात् ४
निर्वेदादात्मसंबोधःसंबोधाद्धर्मशीलता एवंगत्वापरांकाष्ठांप्रपत्स्यंतिकृतंयुगम् ५

न्यविशेषस्तन्मयाः पिनद्धकाअलंकाराः येषांतेएतच्चगुंजादेरप्युपलक्षणं वियोगीनियथाशास्त्रंतत्तद्ग्रहसंयोगहीनानि ३ ८ ३९ वियोनिषुपशुषुविभिन्नवर्णे
षुवा ४० अग्रंग्रासचतुष्टयंअहुतंअदत्तंअग्रंयेषांतानिअन्नानिआकृताग्राणि ४१४२ अरुजोमनःपीडारहितः ४३ इतिहरि॰ तृतीयोध्यायः ३ एवंविलुलितेक
लुषीकृते १२ शीलव्यसनंधर्मनाशं३ निर्वेदः देहादौवैराग्यं ४आत्मसंबोधः विवेकोदयः एवंगत्वाधर्मशीलत्वात्चित्तशुद्धिज्ञानोत्पत्तिद्वारापरांकाष्ठांमोक्षदं-
ज्ञानंतदेवसर्वपापनाशात्कृतंयुगम् ५

उद्देशतः लेशतः विमर्षः विवेकः हेतुवादएव नतुक्रियायांकौतूहलंयेषांते हेतुवादकुतूहलाः वृथापंडिताः ६ निश्चिताः सौगतावैशेषिकाश्चवेदस्यपरतोपिप्रामाण्यंनेच्छंति पूर्वस्तः प्रामाण्यमपरे प्रमाणेकंएकमेवप्रत्यक्षमेवप्रमाणमिति चार्वाकाः नेतीत्यस्यनान्यत्प्रमाणमित्यर्थः ७ ८ ९ तदात्व मात्रंवर्तमानकालिकं दृष्टार्थमात्रेश्रद्धेयाः श्रद्धावंतः वादेशीलेचकुतूहलंआश्चर्यंयेषांतेधर्मवादोपिदुर्लभः किंमुततदाचरणमित्यर्थः १० शेषधर्मपुरस्कृताः अवशिष्टोविष्णुस्मरणादिर्योधर्मस्तदनुसारिणः शमानिदयादीनि ११ असंगुप्तोजितेंद्रियः कषायस्यकलुषस्य १२ शाश्वतींवृत्तिंभिक्षाम् अवरः क्षत्रियादिः १३ ज्ञानंशास्त्रीयोबोधः



उद्देशतोधर्मशीलाः केचिन्मध्यस्थतांगताः विमर्षशीलाः केचित्तु हेतुवादकुतूहलाः ६ प्रत्यक्षमनुमानंच प्रमाणंवेतिनिश्चिताः प्रमाणेकंकरिष्यंतिनेतिपंडितमानिनः ७ अप्रमाणंकरिष्यंतिवेदोक्तमपरेजनाः तदासुखभगाश्चैवभविष्यंतिस्त्रियोपराः ८ नास्तिक्यपरमाश्चापिकेचिद्धर्मविलोपकाः भविष्यंतिनरामूढामंदाः पंडितमानिनः ९ तदात्व मात्रश्रद्धेयाः शास्त्रज्ञानबहिष्कृताः दांभिकास्तेभविष्यंतिवादशीलकुतूहलाः १० तदाविचलितेधर्मेजनाः शेषपुरस्कृताः शुभान्येवाचरिष्यंति दानसत्यसमन्विताः ११ सर्वभक्षोह्यसंगुप्तोनिर्गुणोनिरपत्रपः भविष्यतितदालोकस्तत्कषायस्यलक्षणम् १२ विप्राणांशाश्वतींवृत्तिंयदावर्णावराजनाः प्रतिपत्स्यंतिवृत्त्यर्थंतत्कषायस्यलक्षण म् १३ कषायोपप्लवेलोकेज्ञानविद्याप्रणाशने सिद्धिंस्वल्पेनकालेनयास्यंतिनिरुपस्कृताः १४ महायुद्धंमहानादंमहावर्षंमहाभयम् भविष्यतियुगेक्षीणेतत्कषायस्यलक्षणम् १५ विप्ररूपाणिरक्षांसिराजानः कर्णवेदिनः पृथिवींउपभोक्ष्यंतियुगांतेसमुपस्थिते १६ निःस्वाध्यायवषट्कारा अनेयाश्चाभिमानिनः विप्राः क्रव्यादरूपेणसर्वभक्षावृथाव्रताः १७ मूर्खाः स्वार्थपरालुब्धाः क्षुद्राः क्षुद्रपरिच्छदाः व्यवहारोपवृत्ताश्च च्युताधर्माच्चशाश्वतात् १८ हर्तारः पररत्नानांपरदारापहारकाः कामात्मनोदुरात्मानः सोपधाः प्रियसाहसाः १९ तेषुप्रभवमानेषुतुल्यशीलेषुसर्वतः अभाविनोभविष्यंतिमुनयोबहुरूपिणः २० उत्सन्नायेकृतयुगेप्रधानपुरुषाश्रयाः कथायोगेनतान्सर्वान्पूजयिष्यंतिमानवाः २१ तस्यचौराभविष्यंतितथाचैलापहारिणः भक्ष्यभोज्यापहाराश्च करंडानांचहारिणः २२

विद्याआत्मदर्शनंतयोर्नाशने निरुपस्कृताः निष्परिग्रहाः त्यागमात्रेणस्वल्पेनापिकालेन सिद्धिंमोक्षंयास्यंतीतिकलेर्गुणः १४ १५ कर्णवेदिनः पिशुनवाक्यतत्पराः १६ अनेयाअशास्याः अनयाइतिपाठेनीतिहीनाः १७ व्यवहारेभोजनाच्छादनादावेवउपवृत्तास्तत्पराः १८ सोपधाछलवंतः १९ तेषुदुष्टेषुप्रभवमानेषु ऐश्वर्यवत्सु अभाविनः विनाशभाजः बहुरूपिणः चतुराश्रम्यभाजः २० प्रधानपुरुषईश्वरस्तदाश्रयास्तद्भक्ताः कथायोगेनैवनतुतादृशाचारेण २१ करंडानांकरीषाणामितिसंप्रमांचः स्नानसामग्रीभाजनानांवंशमयानामितिवा २२

२३ २४ २५ २६ उद्देशतःस्वल्पतः २७ मंडलैःसैन्यैः २८ २९ ३० ३१ ३२ ३३ ३४ ३५ निम्नेषुगिरिदर्यादिषुस्थित्वाबीजानांआकृतिंग्राम्यारण्यधान्या
नांस्वरूपंज्ञात्वाभोक्तुंचईहंतइच्छंतः तत्रतत्रापणक्षमंअजैडकंपालयिष्यंति गंधारकाश्मीरादौस्थितास्तुरवरोष्ट्रमितिभेदः २६ पक्केति अद्यप्रस्थौदनंगृहीत्वाश्वःस

चौराश्चौरस्यहर्तारोहंताहर्तुर्भविष्यति चौरैश्चौरक्षयेचापिकृतेक्षेमंभविष्यति २३ निःसारेक्षुभितेलोकेनिष्क्रियेव्यंतरेस्थिते नराः
श्रयिष्यंतिवनंकरभारप्रपीडिताः २४ पितॄनाज्ञापयिष्यंतिपुत्राःकर्मणिसर्वशः स्नुषाश्वश्रूस्तथाचैवयुगांतेप्रत्युपस्थिते २५ वाक्
शरैरर्दयिष्यंतिगुरून्शिष्याःसमंततः यज्ञकर्मण्युपरतेरक्षांसिश्वापदानिच २६ कीटमूषकसर्पाश्चधर्षयिष्यंतिमानवान् क्षेमंसु
भिक्षमारोग्यंसामग्र्यंवापिबंधुषु उद्देशतोनरश्रेष्ठभविष्यंतियुगक्षये २७ स्वयंपालाःस्वयंचोराःयुगसंभारसंभृताः मंडलैःप्रचलि
ष्यंतिदेशेदेशेपृथक्पृथक् २८ स्वदेशेभ्यःपरिभ्रष्टानिःसाराःसहबंधुभिः नराःसर्वेभविष्यंतितदाकालपरिक्षयात् २९ तदास्कंधे
समाधायकुमारान्विद्रुताभयात् कौशिकींप्रतरिष्यंतिनराःक्षुद्भयपीडिताः ३० अंगान्वंगान्कलिंगांश्चकाश्मीरानथमेकलान् ऋ
षिकांतगिरिद्रोणीःसंश्रयिष्यंतिमानवाः ३१ कृत्स्नंवाहिमवत्पार्श्वंकूलंचलवणांभसः अरण्येषुचवत्स्यंतिनराम्लेच्छगणैःसहभ्रने
वशून्यानचाशून्याभविष्यतिवसुंधरा गोप्तारश्चाप्यगोप्तारःप्रभविष्यंतिशास्त्रिणः ३३ मृगैर्मत्स्यैर्विहंगैश्चश्वापदैःसर्पकीटकैः म
धुशाकफलैर्मूलैर्वर्तयिष्यंतिमानवाः ३४ चीरंपर्णंचबहुलंवल्कलान्यजिनानिच स्वयंकृतानिवत्स्यंतियथामुनिजनास्तथा ३५
बीजानामाकृतिंनिम्नेर्षीहंतःकाष्ठशंकुभिः अजैडकंखरोष्ट्रंचपालयिष्यंतियत्नतः ३६ नदीस्रोतांसिरोत्स्यंतितोयार्थेकूलमाश्रि
ताः पक्कान्नव्यवहारेणविपणंतःपरस्परम् ३७ तनूरुहैर्यथाजातैःसमूलांतरसंवृतैः बह्वपत्याःप्रजाहीनाःकुललक्षणवर्जिताः
३८ एवंभविष्यंतितदामनुष्याःकालकारिताः हीनाद्धीनंतदाधर्मंप्रजासमनुवत्स्यति ३९ आयुस्तत्रचमर्त्यानांपरंत्रिंशद्भविष्यति
दुर्बलाविषयग्लानारजसासमभिप्लुताः ४० भविष्यतितदातेषांरोगैरिंद्रियसंक्षयः आयुःप्रक्षयसंरोधाद्विषादःप्रभविष्यति शु
श्रूषवोभविष्यंतिसाधूनांदर्शनेरताः सत्यंचप्रतिपत्स्यंतिव्यवहारोपसंक्षयात् ४२ भविष्यंतिचकामानामलाभाद्धर्मशीलिनः करि
ष्यंतिचसंकोचंस्वपक्षक्षयपीडिताः ४३

पादगुणंदेहीतिव्यवहरंतइत्यर्थः ३७ समूलांतरसंवृतैः मूलधनेनसहितस्यअंतरस्यकलाद्रव्य
स्यसंवृतानिसंवरणानिअपलापास्तैः निमित्तभूतैः यथाकांतैस्तनूरुहैः कलहायमानाव्यवहरंतितथोत्तमवर्णाधमेर्णापणंतआसतइतिपूर्वेणान्वयः ३८
३९ ४० ४१ ४२ संकोचंदुराचारस्येतिशेषः ४३

एवंशुश्रूषादिपादचतुष्टयेप्रवृत्तः धर्मयतः प्रशस्ततरं अहिंसादिधर्मंप्रपत्स्यते ४४ तेषांश्रेयः प्रपन्नानांलब्धानुमानानांअन्वयव्यतिरेकाभ्यां निर्ज्ञातधर्माध
र्मफलानांमध्येगुणेषुशब्दादिविषयेषुवापरिवर्तनंरमणंस्वादुकिंस्विद्धर्मइति संदिह्यविज्ञायतत्त्वंनिश्चित्यएवंवक्ष्यमाणंजनोवदिष्यति ४५ तदेवाह यथे
ति यतःउक्तनिश्चयात् ४६ ४७ यथाशशीतिदृष्टांतंविवृणोति छन्नइति तथाकालइत्यनुकृष्यते ४८ सकलशास्त्ररहस्यंसंगृण्हाति अर्थेति द्वाभ्यां
परंब्रह्मयत् तत्अर्थवादः सत्यस्यैवार्थस्यकथनं तत्वभूतस्यकीटभृंगन्यायेनध्यानक्रिययाभवनं तदेवचवेदार्थइत्युक्तंतमितिविधेयापेक्षंपुंस्त्वंसिद्धस्यैवाला
भेदृष्टांतमाह अनिर्णिक्तमितिमलिनंपित्र्यंस्वर्णपिंडंस्वर्णत्वेनाविज्ञायदरिद्रोस्मीतिमन्यते तस्यमलापगमेतुधनवानहमितिनिश्चिनोत्येवंब्रह्मापिप्रत्यगनन्य

एवंशुश्रूषवोदानेसत्येप्राणाभिरक्षणे चतुष्पादःप्रवृत्तश्चधर्मःश्रेयोभिपत्स्यसे ४४ तेषांलब्धानुमानानांगुणेषुपरिवर्तताम् स्वादुकिं
स्विदितिविज्ञायधर्मएवंवदिष्यति ४५ यथाहानिःक्रमात्प्राप्तातथावृद्धिःक्रमागता प्रगृहीतेयतोधर्मेप्रपत्स्यंतिकृतंयुगम् ४६ साधुवृत्तं
कृतयुगेकषायेहानिरुच्यते एकएवतुकालःसहीनवर्णोयथाशशी ४७ छन्नोहितमसासोमोयथाकलियुगंतथा पूर्णश्चतमसाहीनो
यथाकृतयुगंतथा ४८ अर्थवादःपरंब्रह्मवेदार्थइतितंविदुः अनिर्णिक्तमविज्ञातंदायाद्यमिवधार्यते ४९ इष्टवादस्तपोनामतपोहिस्था
वरंकृतम् गुणैःकर्माभिनिर्वृत्तिर्गुणास्तथ्येनकर्मणा ५० आशीस्तुपुरुषंदृष्ट्वादेशकालानुवर्तिनी युगेयुगेयथाकालमृषिभिःसमुदाहृता ५१
इहधर्मार्थकामानांदेवतानांप्रतिक्रिया आशिषश्चशुभाःपुण्यास्तथैवायुर्युगेयुगे ५२ यथायुगानांपरिवर्तनानिचिरंप्रवृत्तानिविधिः
स्वभावात् क्षणंनसंतिष्ठतिजीवलोकःक्षयोदयाभ्यांपरिवर्तमानः ५३ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभविष्यपर्वणिचतु-
र्थोऽध्यायः ४ सूतउवाच इत्येवमाश्वासयतोराजानंजनमेजयम् अतीतानागतंवाक्यमृषेःपरिषदाश्रुतम् १ अमृतस्येव
संवाहःप्रभाचंद्रमसोयथा अत पर्यतततच्छ्रोत्रंमहर्षेर्वाङ्मयोरसः २

त्वेनावधार्यते ४९ इष्टेतितपोधर्मः वर्णाश्रमयोग्यः सचइष्टवादः स्व
र्गाद्यभीष्टकथनंयतस्तपः स्थावरंअनादि अव्यभिचारिफलकृतंशास्त्रेनिश्चितम् ततश्चगुणैः देहादिभिः कर्माभिनिर्वृत्तिः कर्मसिद्धिर्भवति कर्मणाचतथ्येन
सत्येनगुणाः देहादयइहकर्मभ्योमुक्तिर्नास्ति अतोशरीरंब्रह्माश्रयेदित्यर्थः द्वावेतौपुष्करप्रादुर्भावस्यसूत्रभूतौश्लोकौ ५०आशीः एकस्मादेवकर्मणः फलप्रा
प्तिस्तत्तद्युगीयपुरुषाणांश्रद्धादितारतम्यात्तारतम्येणभवतीत्यर्थः ५१ इहभूमौप्रतिक्रियाफलम् तथैवतारतम्येनेत्यर्थः ५२ यथेतिउत्तरार्धेनथेतिपूरणीय
म् ५३ इतिश्रीहरिवंशेटीकायांचतुर्थोध्यायः ४ इत्येवम् १ संवाहःप्रवाहः २ ५ ५ ५

आख्यानंभारतं ३ दध्युःध्यानंकृतवंतः ४ ५ ६ ७ ८ होत्राणांसंबंधिनोधिष्ण्याग्नयस्तैर्दीप्तशिरसम् ९ १० ११ संज्ञप्तंमारितंसंविवेशतत्समीपेउपविष्टा १२ मि
श्रीबभूवमिथुनीबभूव १३ असंज्ञप्तःमरणप्राप्तःअब्रवीद्राजा १४ १५ १६ १७ १८ १९ अन्वशासत् प्राज्ञसवान् २० आज्ञामेवाह असतीमिति २१ शौंडीर्यंमहात्म्यम् २२ २३

धर्मकामार्थसंयुक्तंकरुणंवीरहर्षणं रमणीयंतदाख्यानंकृत्स्नंपरिषदाश्रुतम् ३ केचिदश्रूणिमुमुचुःश्रुत्वादध्युस्तथापरे इतिहासंतमृ
षिणापाणावित्वनिदर्शितम् ४ सदस्यान्सोभ्यनुज्ञाय कृत्वाचापिप्रदक्षिणम् पुनर्द्रक्ष्यामइत्युक्त्वाजगामभगवानृषिः ५ अनुजग्मुस्त
दासर्वेप्रयांतमृषिसत्तमम् लोकेप्रवदतांश्रेष्ठंयेविशिष्टास्तपोधनाः ६ यातेभगवतिव्यासेनदाब्रह्मर्षिभिःसह ऋत्विजःपार्थिवाश्चैवप्र
तिजग्मुर्यथागतम् ७ पन्नगानांस्रुघोराणांकृतानांवैरयातनाम् जगामरोषमुत्सृज्यराजाविषमिवोरगः ८ होत्राग्निदीप्तशिरसंपरि
त्राय्यतक्षकम् आस्तीकोथाश्रमपदंजगामसमहामुनिः ९ राजापिहास्तिनपुरंजगामस्वजनावृतः अन्वशासच्चमुदितस्तदाप्रमु
दिताःप्रजाः १० कस्यचित्त्वथकालस्यसराजाजनमेजयः दीक्षितोवाजिमेधेनविधिवद्भूरिदक्षिणः ११ संज्ञप्तमश्वंतत्रास्यदेवीकाश्याव
पुष्टमा संविवेशोपगम्याथविधिदृष्टेनकर्मणा १२ तांतुसर्वानवद्यांगींचकमेवासवस्तदा संज्ञप्तमश्वमाविश्यतयामिश्रीबभूवसः १३
तस्मिन्विकारेजनितेविदित्वातत्वतश्चतत् असंज्ञप्तोयमश्वस्तेध्वंसेत्यध्वर्युमब्रवीत् १४ अध्वर्युर्ज्ञानसंपन्नस्तदिंद्रस्यविचेष्टितम्
कथयामासराजर्षेशशापसपुरंदरम् १५ जनमेजयउवाच यद्यस्तिमेयज्ञफलंतपोवारक्षतःप्रजाः फलेनानेनसर्वेणब्रवी
मिश्रूयतामिदम् १६ अद्यप्रभृतिदेवेंद्रमजितेंद्रियमस्थिरम् क्षत्रियावाजिमेधेननयक्ष्यंतीतिशौनक १७ ऋत्विजश्चाब्रवीत्क्रुद्धःस
राजाजनमेजयः दौर्बल्यंभवतामेतद्यदयंधर्षितःक्रतुः १८ विषयेमेनवस्तव्यंगच्छध्वंसहबांधवैः इत्युक्तास्तत्यजुर्विप्रास्तंनृपंजात
मन्यवः १९ अमर्षादन्वशासच्चपत्नीशालागताःस्त्रियः राजापरमधर्मज्ञस्तामसोजनमेजयः २० असतींवपुष्टमामेतांनिर्यातयतमे
गृहात् ययामेचरणौमूर्ध्निपातितौरेणुगुंठितौ २१ शौंडीर्यमेययाभग्नंयशोमानश्चदूषितः नचैनांद्रष्टुमिच्छामिपरिक्लिष्टामिवस्र
जम् २२ नस्वादुसोऽश्नातिनरःस्रुवंस्वपितिवारहः अन्वास्तेयःप्रियांभार्यांपरेणमृदितामिह २३ पुनर्नैवोपभुंजंतिश्वावलीढंहविर्यथा
एवमुच्चैःप्रभाषंतंक्रुद्धंपारिक्षितंनृपम् गंधर्वराजःप्रोवाचविश्वावसुरिदंवचः २४ विश्वावसुरुवाच त्रियज्ञशतय
ज्वानंवासवस्त्वांनमृष्यते अप्सरास्तेनपत्नीतेविहितेयंवपुष्टमा २५ रंभानामप्सरादेवीकाशिराजसुतामता सैषायोषिद्वराराजन्
रत्नभूताभुज्यतां २६

२४ २५ २६ श्रीमद्वेदव्यासायनमः ५ ५ ५ ५

२७ आवर्तितः विघ्नितः २८ २९ तेलया ३० ३१ ३२ नघुः पौत्रस्य अविक्रमेदित्यत्राविरित्युपसर्गः अइतिनिपातोवा ३३ ३४ ३५ ३६ ३७ ३८ अदुष्टाः



यज्ञेविवरमासाद्यविघ्नमिंद्रेणतेकृतम् यज्वाह्यसिकुरुश्रेष्ठसमृध्द्यावासवोपमः २७ बिभेत्यभिभवाच्छक्रस्तवक्रतुफलैर्नृप तस्मादावर्तितश्चैवक्रतुरिंद्रेणतेविभो २८ मायैषावासवेनेहप्रयुक्ताविघ्नमिच्छता कृतोविवरमासाद्यसंज्ञप्तंदृश्यवाजिनम् २९ रतमिंद्रेणरंभायांमन्यसेयांवपुष्टमाम् अथतेगुरवःशप्तास्त्रियज्ञशतयाजिनः ३० त्वंशिनस्त्वंचविप्राश्चफलादिंद्रसमादिह त्वत्तश्चैवक्रतुर्धर्षास्त्रियज्ञशतयाजिनः ३१ बिभेतिहिसदात्वत्तोब्राह्मणेभ्योपिवासवः एकेनवैतदुभयंतीर्णंशक्रेणमायया ३२ सएषसुमहातेजाविजिगीषुःपुरंदरः कथमन्यैरनाचीर्णंनमुदारानतिक्रमेत् ३३ विश्वावसुरुवाच यथैवहिपराबुद्धिःपरोधर्मःपरोदमः यथैव परमैश्वर्यं कीर्तिं तंहरिवाहने ३४ तथैवत्वयिदुर्धर्षेस्त्रियज्ञशतयाजिनि ३५ मावासवंमान्वगुरुमात्मानंमावपुष्टमाम् गच्छदोषेणकालोहिसर्वथादुरतिक्रमः ३६ ऐश्वर्येणाश्वमाविश्यदेवेंद्रेणासिरोषितः आनुकूल्येनदेवस्यवर्तितव्यंसुरवार्थिना ३७ दुस्तरंप्रतिकूलंहिप्रतिस्रोतइवांभसः स्त्रीरत्नमुपभुंक्ष्वेमामपापांविगतज्वरः ३८ अपापास्त्यज्यमानावैत्यज्येयुरपियोषितः अदुष्टास्तुस्त्रियोराजन्दिव्यास्तुसविशेषतः ३९ भानोःप्रभाशिरवावह्नेर्वेदीहोत्रेतथाहुतिः परामृष्टाप्यसंसक्तानोपदुष्यंतियोषितः ४० ग्राह्यालालयितव्याश्चपूज्याश्चसततंबुधैः शीलवत्योनमस्कार्याःपूज्याःश्रियइवस्त्रियः ४१ इतिश्रीमन्महाभारतेखिलेषुहरिवंशे भविष्यपर्वणिपंचमोऽध्यायः ५ सौतिरुवाच एवंसविश्वावसुनानुनीतःप्रसादमागम्यवपुष्टमायाः चकारमिथ्याव्यतिशंकितात्माशांतिंपरांमानवधर्मदृष्टाम् १ श्रममभिविनिवर्तमानसंसःसमभिलषज्जनमेजयोयशःस्वम् विषयमनुशशासधर्मबुद्धिर्मुदितमनारमयन्वपुष्टमांताम् २ नहिविरमतिविप्रपूजनान्नचविनिवर्ततियज्ञदानशीलात् नविषयपरिरक्षणात्च्युतोभूत्नच परिगर्हतितांवपुष्टमांच ३ विधिविहितमशक्यमन्यथाहिकर्तुंयदृषिरचिंत्यतयापुराब्रवीत्सः इतिसनृपतिरात्मवांस्तदासौस्तदनुविचिंत्यबभूववीतमन्युः ४ इदंमहाकाव्यमृषेर्महात्मनःपठन्नृणांपूज्यतमोभवेन्नरः प्रकृष्टमायुःसमवाप्यदुर्लभंलभेच्चसर्वज्ञफलंचकेशवं ५ शतक्रतोःकल्मषविप्रमोक्षणंपठन्निदंमुच्यतिकल्मषान्नरः तथैवकामान्विविधान्समश्नुतेह्यवाप्तकामश्चचिरायनंदति ६

अल्पदोषाइत्यर्थः ३९ परामृष्टाप्यसंसक्तादूषिताप्यदूषितेत्यर्थः ४० ४१ इतिहरिवंशेभविष्यपर्वणिटीकायांपंचमोऽध्यायः ५ मिथ्याव्यतिशंकितात्मानिर्निमित्तंदूषितचित्तः १ २ ३ विधिविहितमितिपादेऽक्षरत्रयाधिक्यमार्षम् ४ ५ ६ ६

वटादुत्पन्नंफलंवटांतरं वर्धयति व्यासादुत्पन्नोयंग्रंथस्तु व्यासमेववर्धयतीत्याश्चर्यमितिभावः ७ बंधनंसंसारक्रमेणमुच्यतइत्यर्थः ८ ९ १० ११ १२
इच्छसि श्रोतुमितिशेषः १३ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसगोविंदसूरिसूनोर्नीलकंठस्यकृतौभारतभावदीपेहरिवंशांतर्ग-

यथाहिपुष्पप्रभवंफलंद्रुमाः फलात्प्रजायंतिपुनश्चपादपाः तथामहर्षिप्रभवाइमागिरः प्रवर्द्धयंतेतमृषिंप्रवर्द्धिताः ७ पु
त्रानपुत्रोलभतेकृवर्चसश्श्रुतःपुनर्विंदतिचात्मनःस्थितिम् व्याधिंनचाप्नोतिचिरंसबंधनंक्रियांचपुण्यांलभतेगुणान्वितः
८ पतिमभिलभतेचसत्कृकन्याश्रवणस्तुपत्यशुभासुनस्तुवाचः जनयतिचसुतान्गुणैरुपेतान्स्वजनहितंद्विषतांप्रमर्दनंच ९
विजयतिवसुधांचराजवृत्तिर्धनमतुलंलभतेद्विषज्जयंच विपुलमपिधनंलभेच्चवैश्यःसुगतिमियाच्छ्रवणाच्चशूद्रजातिः १० पुरा
णमेतच्चरितंमहात्मनामधीत्यबुद्धिंलभतेचनैष्ठिकीम् विहायदुःखानिविमुक्तसंगःसवीतरागोविचरेद्वसुंधराम् ११ इत्येन
दाख्यानमुदाहृतंवैप्रतिस्मरंतोद्विजमंडलेषु स्थैर्येणधैर्येणपुनःस्मरंतःसुखंभवंतोऽनुचरंतुलोकम् १२ इतिचरितमिदंमहात्म
नामृषिकृतमद्भुतवीर्यकर्मणाम् कथितमिदंहिसमासविस्तरैःकिमपरमिच्छसिकिंब्रवीमिते १३ इतिश्रीमन्महाभारतेखिले
षुहरिवंशेभविष्यपर्वणिभविष्यांतग्रंथार्थप्रकाशोनामषष्ठोऽध्यायः६ ५ ५ ५

तभविष्यांतग्रंथार्थप्रकाशटीकायांषष्ठोऽध्यायः ६ श्रीगोपालायश्रीकृष्णायनमः ५ श्रीर्जयति ५ ५

श्रीः श्रीमद्गोपालमानम्यव्याकुर्वेपुष्करोद्भवम् ख्यातश्चतुर्धरःशिक्षानयप्रणयसंयमैः १ उत्तानेषुनकौशविग्रहवलंपद्येषुपश्रयितंगंभीरेषुन सेतवोनविहिताःकूटाननस्फोटिताः नच्छिन्नानतमश्चराननततिभिक्तानन्नाल्हादितानोदीनाश्चविभीषणानविहिताश्रीलक्ष्मणार्याश्रितैः २ करूर्यंवक मृतंकालकूटाभंपुष्करोद्भवम् कंठेकर्तुंक्षमोलीकेकामजित्पुरुषोत्तमः ३ तत्रतावदिहवक्तुमर्हसिधर्मज्ञयशोनारायणात्मकमिति नतस्यैशेकस्त्वनतस्य नाममहद्यशः तस्मिन्यशोनिहितंविश्वरूपमितिश्रुतिप्रसिद्धस्यनारायणात्मकस्ययशःशब्दितस्यवक्तव्यत्वेनोपक्रमात् अधीत्यसर्वमध्यात्मंदेवलोके महीयतइत्युपसंहारेणचास्यकृत्स्नस्यवाक्यसंदर्भस्यषड्विंशत्यध्यायसंमितस्यब्रह्मपरत्वंनिश्चीयते यत्विहजगदुद्भवादिकमुक्तंतस्फलवत्संनिधावफलं तदंगमितिन्यायेनमहावाक्यंप्रतिपाद्यब्रह्माद्वैतप्रतिपत्यर्थमेव येचात्रएकार्णवदेवासुरादिशब्दास्तेपियथाअजामेकांलोहितशुक्लकृष्णां द्वासुपर्णासयु जासखाया इत्यादिश्रुतिषुमेषीशकुन्यादिवृत्तांतकथनमुखेनब्रह्मतत्वंनिरूपितं तथानिर्विशेषचिन्मात्रशमकामादिचेतोवृत्तिविशेषपरतयाव्याख्ये याःसलिलएकोद्रष्टाद्वैतोभवति इयाहप्राजापत्यादेवाश्चासुराश्चेत्यादिश्रुतिष्वपिअनयेवभंग्याब्रह्मतत्वनिरूपणदर्शनात् एवंचैकार्णवादिशब्दानांसलि

जनमेजयउवाच प्रभावंपद्मनाभस्यस्वपतःसागरांभसि पुष्करेवैयथोद्भूतादेवाःसर्षिगणाःपुरा १

लादिश्रुतिसमानार्थत्वेनतयोर्मूलमूलिभावेसंभवति खंडप्रलयपरतयातद्व्याख्यानमसत्स्वप्याकाशादिषु जलधातुमात्रस्यसद्भावासंभवात्तत्पौर्वापर्यविरोधा दुपेक्ष्यम् एवंचात्रएकार्णवंविशन्द्वाचित्विष्णुरव्याकृतंनभः पुष्करंद्विविधंकार्यंशमकामौसुरासुरौ अनयेवदिशाध्यात्ममाधिदैविकरूपकैः निरूपि तंपुराणेषुपूर्वैरपिनसंशयः पुष्करंपुष्करप्रादुर्भावेतदिहदृश्यते अतस्तद्व्याख्ययासर्वपुराणंव्याकृतंभवेत् विद्याधिकारावगताश्वमेधादिकेष्विह इंद्रहत्याद यःशब्दाआत्ममोहपराःकृताः अत्रापिब्रह्मणस्तद्वत्सारोक्ष्येणनिरूपणंचक्रेदुर्जनचोरेभ्यस्तत्वरत्नंसुरक्षितुम् १ अनयेवदिशावेदेज्ञेयंवृत्रवधादिकम् इत्याशयेनभगवान्व्याख्यत्पारोक्ष्यतत्परम् २ पुष्करप्रादुर्भावेध्यात्मविद्यास्वरूपेणाधिदैविकादिरूपकेणचदर्शितांयथामतिव्याकुर्मः तत्रपूर्वंभविष्येसंसा रिणामत्युल्बणांगतिंश्रुत्वाअत्यंतमुद्विग्नस्तरतिशोकमात्मविदितिश्रुतेर्नान्यःपंथाविद्यतेऽयनायेतिश्रुतेश्चात्मज्ञानादन्यःश्रेयःसाधनमपश्यन् तदेवसविस्त रंजिज्ञासमानोजनमेजयउवाच प्रभावंपद्मनाभस्येत्यादि पद्मनाभस्यप्रभावमाख्याहीतिसंबंधः पद्मंकृत्स्नकार्यप्रपंचःसनाभौगर्भेयस्यसः मायोपा

धिरीश्वरः तस्य प्रभावं सृष्ट्यादिसामर्थ्यं कथयेत्यर्थः किंभूतस्य सागरांभसि स्वपतः सागरवदनंतं अपारं च अंभ इवांभः एकं रसं॰ महद्भूतमनंतमपारं॰ सलिलएकोद्रष्टा द्वैतो भवतीत्यादिश्रुतिप्रसिद्धं ब्रह्म न तु प्राकृत समुद्रांभः नष्टानलानिले लोके नष्टाकाश महीतल इति वाक्यशेषे तत्कारणस्याप्यादेरपिनाशेतदवस्थानायोगात् तस्मिन्सागरांभसि शुद्धे ब्रह्मणि स्वपतः स्वपीतो भवति तस्मादेनं स्वपीतीत्याचक्षत इति स्वपितिनामनिर्वचनात् ईश्वरग्रासस्तुरीयतुरीयः अव्यक्तं पुरुषे ब्रह्म निष्कले संप्रलीयत इति श्रुतिस्मृत्योरीश्वराव्यक्तशब्दितस्य मायाविनः शुद्धे लयोपलंभात्स्वं निजं मायातीतं रूपं पततिगच्छतीति स्वपन् तस्य स्वपत इति योगेन निष्कले ब्रह्मणि कैवल्ये समाधौ वा लीयमानस्य मायाविनः प्रभावं ब्रूहीति मुख्यः प्रश्नः पुष्करे ब्रह्मांडे वा ऋषयश्च कथमुत्पन्ना इति वा व्योम पुष्करमंबरमिति पुष्करशब्दस्य व्योमवाचित्वेन व्योमपर्यायाणां च प्रायेण एवं ब्रह्म अमृतं दिवि परमे व्योमन्नित्युपनिषत्सु व्याकृताकाशे प्रसिद्धेः पुष्कराख्येतस्मिन्देवर्षयः इंद्रियप्राणाः सूत्रात्मेति यावल्कथमुत्पन्ना इति द्वितीयप्रश्नः १ योगं सूत्रे शश्वद्धानामधिगमोपायं आख्याहीति तृतीयः प्रश्नः २ नो व्योमापरो यत् तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमेति

एतदाख्याहि निखिलं योगं योगविदांपते शृण्वतस्तस्य मे कीर्तिं न तृप्तिरभिजायते २ कियंतं चैव कालं वै शयिता पुरुषोत्तमः किमर्थं शयते कालं तस्य कालस्य संभवः ३ कियता चैव कालेन प्रबुध्यति सुराधिपः कथमुत्थाय भगवान्सृजन्निखिलं जगत् ४ के प्रजापतयस्तात आसन्पूर्वं महामुने कथं निर्मितवांश्चैव चित्रं लोकं सनातनः ५ एवमेकार्णवे लोके नष्टे स्थावरजंगमे नष्टे देवासुरगणे प्रनष्टोरगराक्षसे ६

श्रुतिस्मृत्योर्विशेषणीभूतमायातिरोधानप्रादुर्भावाभ्यां सृष्टेः प्रागूर्ध्वं च तद्धेतोर्मायाविनः स्थितिकालावधिं पृच्छति कियंतमिति स्थित्वेति शेषः शयिते निद्रां शयनं करिष्यतीत्यर्थः कियता चैव कालेन सशेते इति पाठे तु महानपि कालो भोगलुब्धानां अल्प एवेत्यभिप्रेत्य वर्तमानसामीप्ये वर्तमानवद्वेति शेते इति लट् प्रयुक्तः तृतीयं पृष्ट्वा चतुर्थं पृच्छति किमर्थमिति कालस्य संभवो योनिः सन् काले किमर्थं शेते परिमितकालावेव सृष्टिप्रलयौ कुतः करोति प्रवाहनित्यां वा सृष्टिं कुतो न करोतीत्यर्थः कालमिति द्वितीयाऽत्यंतसंयोगे शयत इति शयोलुगार्षः श्रयत इति पाठः स्वच्छः स्वपत इति पाठे स्वपीतीत्यर्थः आत्मनेपदं चार्षम् ३ लयकालावधिं पृच्छति कियतेति एवं कियंतमित्यादिना सार्धश्लोकेन स्वपत इति प्रथम श्लोकपदार्थं विविच्य पृष्ट्वा यथोद्भूता इत्यपि तथैव पृच्छति सार्धेन कथमिति कूटस्थस्याद्वितीयस्य कथमुपादानत्वं युज्येतेत्यर्थः ४ एतदेवाह सनातनः सर्वदैकरूपः कूटस्थ इत्यर्थः ५ अद्वितीयत्वमाह एवमिति द्वाभ्याम् एकार्णवे शुद्धचिन्मात्रे लोके आत्मानमेव लोकमुपासीतेत्यात्मनि लोकशब्दस्य श्रौतप्रसिद्धेः लोके नष्ट इति व्यधिकरणे सप्तम्यौ चिदात्मनि स्थावरादावदर्शनं गते सतीत्यर्थः ६

भा॰टी॰
८

प॰
२

एतेनयोगमारव्याहीतितृतीयप्रश्नेयोगशब्दार्थोविवृतः एतदेवोपसंहरति केवलमिति गव्हरंनैघंटुकप्रसिद्ध्याआकाशः नभःशून्यमितितेनलक्ष्यते गव्हरमि
तित्रिविधभेदशून्यत्वाद्गव्हरीभूतेइत्यभूततद्भावार्थस्यच्वेः प्रयोगः शून्यतुल्यंदधतइत्युक्तंश्रीभागवतेवेदस्तुतौमहाभूतानिवियदादीनितेषांविपर्ययःप्रलयोयस्मिन्
तस्मिन्नेकार्णवेसतीत्यर्थः ७ प्रभुरिति प्रभुश्चिदात्माकांविधिंनियतिम् भाग्यंस्त्रीनियतिर्विधिरिति साहचर्याद्विधिशब्दस्यस्त्रीत्वम् प्रभुः किमहत्स्वरूपंसहा
यमादायआश्रित्यमहाभूतपतिर्वियदादिस्रष्टाईशः महातेजाइतिसमष्टिस्तैजसः सूत्रात्मामहानितिरिति अत्यंतविस्तृतोविराड्चभूत्वाआस्ते सुराः महदाद्याः
तेषांगुरुः ईशः तस्यापिश्रेष्ठइतिविभोर्विशेषणम् ८ अध्यारोपापवादाभ्यांनिष्प्रपंचंप्रपंच्यतइतिन्यायमाश्रित्यहिब्रह्माद्वैतंप्रसाध्यम् तच्चाध्यारोपस्यैवदु
र्वचनत्वादनुपपन्नंत्वयाच्चअसकृत्तदेवोपपादितमतः संशयाविष्टस्यमेनिःसंशयंज्ञानंयथास्यात्तथाव क्तुमर्हसीत्याह तन्मेत्वमिति उपपन्नाययोग्या
य यशोनारायणात्मकंनरोविद्यावच्छिन्नंब्रह्मतेनस्वात्मनिकल्पितंईशसूत्रविराडंतंनारंतस्यसमूलस्य अयनंस्थानंनारायणःशुद्धंवस्तु तदात्मकंयशःवैभव

नष्टानलानिलेलोकेनष्टाकाशमहीतले केवलंगव्हरीभूतेमहाभूतविपर्यये ७ प्रभुर्महाभूतपतिर्महातेजामहानतिः आस्तेस्वर
गुरुश्रेष्ठोविधिमादायकांमुने ८ तन्मेत्वमुपपन्नायब्रह्मन्नेतदसंशयम् वक्तुमर्हसिधर्मिष्ठयशोनारायणात्मकम् ९ प्रादुर्भावंपुर
स्कृत्यभूतंभव्यंमहात्मनः श्रद्धानामुपविष्टानांभगवान्वक्तुमर्हसि १० वैशंपायनउवाच नारायणयशोज्ञानेयाभवेद्भवतःस्पृ
हा त्वद्वंशानघपूतस्यकार्यंकुरुकुलर्षभ ११ शृणुष्वादिपुराणेभ्योदेवताभ्योयथाश्रुति ब्राह्मणानांचवदतांश्रुतोस्माभिर्महात्मनाम् १२ त
थाचतपसाहृष्टोबृहस्पतिसमद्युतिः पाराशर्यस्ततःश्रीमान्गुरुर्द्वैपायनोब्रवीत् १३

विलासः ईशादिघटांतः तंवक्तुमर्हसीतिसंबंधः अशेद्वैवच
नेयुद्धेनिअशोरस्कन्प्रत्ययेसुट् एतेनअनंतरोबाह्यः कृत्स्नः प्रज्ञानघनइतिश्रुतिप्रसिद्धंसबाह्याभ्यंतरंशुद्धंचिन्मात्रंनारायणरूपमितिसर्वत्रश्रुतंतदुपपत्तिपूर्व
कंव्युत्पादयेतिसूचितम् ९ भूतंविद्वद्दृष्ट्यानित्यसिद्धंप्रादुर्भावंअधिष्ठानानतिरेकात्मूढदृष्ट्याभव्यंउत्पद्यमानम् श्रद्धाविद्यतेयेषांतेश्राद्धाः प्रज्ञाश्रद्धार्चाभ्यो
णइतिमत्वार्थीयोणः १० प्रष्टारंप्रोत्साहयन्वैशंपायनउवाच नारायणायेति हेअनघ हेकुरुकुलर्षभ नारायणात्मकयशोज्ञानेयाभवतःस्पृहाभवेत्सात्वद्वंशा
त्वद्वंशेउचिता विभक्तधनेषुभ्रातृषुविभक्ताइतिवदुत्तरपदलोपः साऽस्पृहापूतस्ययज्ञाद्यनुष्ठानस्यकार्यंफलं तमेवंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदा
नेनतपसानाशकेनेतिश्रुतेः भूतस्येतिपाठेलब्धजन्मनइदमेवकार्यंकरणीयंयद्भगवद्विचारोऽन्यथानिष्फलंजन्मेत्यर्थः ११ श्रुतिंउपनिषद्वाक्यंअनतिक्रम्येति
यथाश्रुति श्रुतःपद्मनाभस्यप्रभावइतिएषस्यविशेष्यस्यानुकर्षः १२ तपसापुण्येनहृष्टोमयेतिशेषः दृष्ट्वेतिपाठेतपसाध्यानेनदृष्ट्वापद्मनाभस्यप्रभावमि
तिपूर्ववत्एषानुकर्षः १३

८

नन्वेहं यद्देवतादिभ्यः श्रुतंयच्च द्वैपायनेनोक्तंतद्याकुल्यात्सर्वंवोढुमशक्यमित्याशयेनाह यथाशक्तीति यथाश्रुतंनविज्ञातुंविशेषेणज्ञातुंमयानशक्यंऋषिर्मंत्रद्र
ष्टातन्मात्रेण सोऽहंभगवोमंत्रविदेवास्मिनात्मविदिति छांदोग्येसनत्कुमारंप्रतिवदतानारदेनेवेत्यर्थः १४ परंपुरुषंनारायणात्मकंशुद्धचिदात्मकंयंपुरुषंब्रह्मा
पिवेदोपिविश्वात्मनः साकल्यात्सर्वात्मनासुख्यहृत्येतियावत् नवेद ते यतोवाचोनिवर्ततइतिश्रुतेः कार्त्स्न्येननवेदयतेकिंतुभागलक्षणयानुवेदयतइवेत्यर्थः
१५ श्रुतंमेमयाविश्वेषांदेवानांमहर्षीणांच ऋक्तत्वमार्षं यद्रहस्यंगोप्यंतत् इदंइदमेवयत्वयापृष्टंनारायणात्मकंयशः कीदृशानांविश्वेदेवानांतत्वतअनारो
पितरूपेणसर्वदेवआत्मैवयेषांतेसर्वदेवास्तेषांसर्वंखल्विदंब्रह्मइदंसर्वंयदयमात्मेतिश्रुतेः अतएवकृपयाशिष्यान्प्रतितत्ववादिनांतत्वमेववक्तुंशीलंये
षांतेषां १६ कारणंप्रवर्तकं यत्तद्दैवंदेवानांविदुषामिदंदैवंअधिअधिकम् दैवंमहाभाग्यंज्ञानाख्यं यद्देवानांदैवंतदश्वैतदासवानीति एषास्यपरमासंपदि

नत्तेहंसंप्रवक्ष्यामियथाशक्तियथाश्रुतम् नविज्ञातुंमयाशक्यमृषिमात्रेणभारत १४ कःसमुत्सहतेज्ञातुंपरंनारायणात्मकम्
विश्वात्मनोयंब्रह्मापिनवेदयतितत्वतः १५ श्रुतंमेविश्वदेवानांयद्रहस्यंमहर्षिणाम् तदिदंसर्वदेवानांतत्वतस्तत्ववादिनां १६
तद्ध्यात्मविदांचिंत्यंकारणंचैवकर्मिणाम् अधिदैवंचयद्दैवंतद्दैवमितिसंज्ञितम् १७ यद्भूतमधिभूतंचयत्परंचमहर्षिणाम् यत्स
त्यंदेवदृष्टंचयत्तद्वेदविदोविदुः १८ यःकर्ताकारकोबुद्धिर्मनःक्षेत्रज्ञएवच प्रधानंपुरुषःशास्ताएकस्तदभिशब्द्यते १९

तिश्रुतेः तद्युक्तदैवमदृष्टमितिसंज्ञितम् सर्वेषांसुखकरंभाग्यम् एतस्यैवानंदस्यान्यानि भूतानिमात्रामुपजीवंतीति श्रुतेः १७ अध्यायशेषेणाअनुवा
दसुखेनप्रश्नानांक्रमेणसंक्षिप्योत्तराण्याह यद्भूतमित्यादिना भूतंअनादिअनादित्वंव्यवहारेमायायामप्यस्तीत्यतउक्तं अधिभूतंसर्वेषुतेषु सद्रू-
पेणानुस्यूतम् अनंतमित्यर्थः जाड्यरूपेणमायापिसर्वत्रानुस्यूतेत्यतउक्तंपरमिति महर्षीणांमहर्षिणांज्ञेयतयेतिशेषः परंउत्कृष्टंजडस्यपरत्वायोगा
त् परत्वंमायोपाधिकेप्यस्तीत्यतउक्तंसत्यमिति मायायाबाधितत्वेनतस्यापिबाधितत्वादसत्यत्वंसत्यमप्यचिद्रूपंचेत्तत्राह देवदृष्टंदेवश्चक्षुरादिप्रत्यक्षंत
स्यापिदृष्टंप्रत्यक्षंनदृष्टेर्द्रष्टारंपश्येःप्राणस्यप्राणमुतचक्षुषश्चक्षुरित्यादिश्रुतेः ज्ञानमात्रस्वरूपमित्यर्थः वेदंसत्यंज्ञानमनंतंब्रह्मेत्यादि विदंतितेवेदविदो
विदुः एतेनसागरांभोरूपंसुद्धमुक्तम् १८ अस्यतटस्थलक्षणमाह यइति कर्ताविपदादेः कारकोहिरण्यगर्भद्वाराभौतिकस्य बुद्धिर्मनइति महदहं
काररूपत्वमुक्तम् क्षेत्रज्ञइति साक्षिमात्रेणद्रष्टृत्वं एतेनपद्मनाभप्रभावउक्तः उक्तेर्थेभोक्ताभोग्यंप्रेरितारंचमत्वासर्वंप्रोक्तंत्रिविधंब्रह्मएतदिति
श्रुतिंप्रमाणयन्योगमाह प्रधानमिति प्रधानंजडम् पुरुषोजीवः शास्ताईशः एतत्त्रितयंएकएवपरमात्मेति १९

तृतीयंप्रश्नोत्तरंकियंतमित्यादिनासार्धश्लोकेन ईश्वरस्यकालाधीनत्वंचोदितन्निराचष्टेऽर्धेन कालइति कालंस्वपयति स्वापयति कालस्यापिकालइत्यर्थः अतए
व स्वाधीनोनतुकालाधीनः कथमुत्थयेत्यादिनासार्धेनकार्यसृष्टिः पृष्टा तत्रोत्तरमाह प्राणइत्यादिनासार्धद्वयेन २० हेअनघ यत्ध्रुवंअविनाशि अतएवअक्ष-
यः ह्रासशून्यःसएवप्राणः वृत्तिभेदेनपंचवि धः तत्परैःप्राणोपास्तिपरैः विविधैर्भावैः प्राणनादिकार्यभेदैर्हेतुभिरुच्यते सएवचसर्वंवियदादिकरोतुसादयति
किमुपादानांतरमपेक्ष्यनेत्याह विकरोतिचमायावेवात्मानंपरिणमयतीत्यर्थः २१ योस्मान्कर्मकारयतेए षह्येवसाधुकर्मकारयतीत्यादिश्रुतेः तेनैवचवयंव्या
कुलीकृताः विधिनिषेधगहनेप तिताःसंतः आस्मआस्महे अनुदात्तेत्वलक्षणमात्मनेपदमनित्यंचक्षिङोङित्कारणात्तज्ज्ञापकात् तेनआसउपवेशनेअ
स्मात्परस्मैपदेपिआस्मेतिसाधुयतस्तेनव्याकुलीकृताः अतस्तमेववयजामहेयज्ञैःइच्छाम प्रार्थनायांलोङुत्तमबहुवचनं निर्वृताःशांताःसंतः २२ सर्वंचि
न्मात्रमेवेत्याहद्वाभ्यां योवक्तेति वक्तावाचःप्रवर्त्तकः वक्तव्योऽर्थः अहंवक्तृत्वाभिमानीजीवः यत्इदंश्रृणुतश्रवणक्रिया यत्श्रेयोमोक्षः यच्चान्यत्स्वर्गादिप्र

कालःकालंस्वपयतिद्रष्टास्वाधीनएवच प्राणःपंचविधश्चैवध्रुवमक्षयएवच २० उच्यतेविविधैर्भावैस्तस्यैवानघतत्परैः स-
एवभगवान्सर्वंकरोतिविकरोतिच २१ योऽस्मान्कारयतेकर्मतेनास्मोव्याकुलीकृताः यजामहेतमेवेशंतमेवेच्छामनिर्वृताः २२ योव-
क्तायच्चवक्तव्योयश्चाहंतद्ब्रवीमिवः इदंश्रृणुतयच्छ्रेयोयच्चान्यत्परिजल्पथ २३ याःकथाश्चैववर्तंतेश्रुतयोवाथगह्वराः विश्वंविश्वपतिर्दे
वाःसर्वंनारायणात्मकम् २४ यत्सत्यंयदनृतमादिमक्षरंवैयद्भूतंभवतिमियच्चयद्भविष्यम् यत्किंचिच्चरमचराख्यमत्रिलोकेतत्सर्वंपु
रुषवरःप्रभुर्वरिष्ठः २५ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेपुष्करप्रादुर्भावेसप्तमोऽध्यायः ७ वैशंपायनउवाच
चत्वार्याहुःसहस्राणिवर्षाणांतुकृतंयुगम् तस्यतावच्छतीसंध्याद्विगुणाजनमेजय १

श्रूयनानाविकल्परूपं २३ कथाःश्रुतार्थवादाःगह्वराःरहस्यप्रतिपादकाः विश्वंपाल्यंविश्वपतिःपालकःदेवाःकरणानिसर्वंतत् नारायणात्मकमितिवःयुष्मा
न्प्रतिब्रवीमीतिसंबंधः २४ एतदेवोपसंहरति यत्सत्यमिति सत्यानृतेलौकिके आदिमंआदौभवंकारणं क्षरंकार्यंचतदुभयात्मकंभूतंअतीतंमियच्चप्रभ-
वति परस्परजनकंबीजांकुरादिभविष्यमनागतं चरंपरिणामिअचरंकूटस्थंवरिष्ठःनारायणःवरीयान्पुरुषःवरःसमष्टिजीवःअवरोव्यष्टिजीवःकल्पितानेतानपेक्ष्यव
रिष्ठत्वंशक्तृस्यप्रभोरितिभावः २५ इतिश्रीहरिवंशेटीकायांपुष्करप्रादुर्भावप्रकाशेसप्तमोऽध्यायः७ ज्ञानसाधनवैराग्यसिद्ध्यैपुनःत्तिकादि
वत् ब्रह्मादेःक्षयितांवक्तुंयुगमानमिहोच्यते १ चत्वारीति तावच्छती चतुःशती द्विगुणा अष्टौशतानियुगसंध्यातस्यांपूर्वोत्तरयुगयोर्धर्मामिश्रीभवंती
त्यर्थः एतानिदैवमानेन अष्टशताधिकानिचत्वारिसहस्राणिसौरमानेनसाष्टाविंशतिसहस्रीसप्तदशलक्षीवत्सराणांभवति सावनमानेनतुप्रत्यब्दंपंच
दिनानिपंचदशघटिकाएकत्रिंशत्पलानित्रिंशदक्षराणिचवर्धंते तान्यपिएकराशौसंवत्सरत्रयस्पर्शिशरोलुप्तसंवत्सरैर्हीयंते १ ५

योगमुक्त्वा तद्विदं स्तौति योगारंभमिति इदं ब्रह्मचर्यं यो विंदति स वेदवित् य एतत्सर्वभूतानां प्रभवः तत्साधकत्वात् योगो हि प्रभावाप्ययाविति श्रुतेः कीदृशं तत् योगेनैवा
रभ्यते न तु शब्दविचारेण कर्म मनःसंयमः तेन साध्यम् ५५ ५६ वैष्णवमिति विष्णुशब्दं वस्तु तत्प्रापकं वैष्णवं तस्मिन् वेदस्य उपनिषत् ब्रह्मविद्या तस्याधिग-
म्य वेदोपनिषदे स्वाराज्ये निमित्ते सति ब्राह्मणाः ब्रह्मविदः नियमं मनोनिग्रहं श्रांतास्ते ब्रुवंते अत्यंतदुष्करमनोजयसाध्योयमित्यर्थः ५७ प्रसंगात्समाधौ प्रली
नस्य चेतसः कुतः पुनरुपलंभ इत्याशंकते चेतस इति कामतः इच्छया मनोयाह्यस्य स्वेनैव स्वयं दग्धेंधनानलवदुपशामितुं योग्यया ५८ शारीरेण कृतं शारी
रं धर्माधर्मरूपं मानसं मनसि भवतीति मानसं शरीरकृतं कर्म मनसि संस्काररूपेण स्थितं मनसा उद्बोधकमित्यर्थः ५९ अस्यैव प्राबल्यमाह येनेति येन चै
तन्येन सर्वं ज्ञायते तेन दात्मत्वाद वेद्यमपि शास्त्राचार्योपदेशमनुलक्षणया वेद्यं भवत्येव तथापि कर्मणां नयत्तु शक्यमतः कर्मैव बलवत्प्रतिबंधकमित्यर्थः ६० तस्य
च निवृत्तिरपि सत्कर्मणैवेत्याह ब्राह्मणेनेत्यादिभिः चतुर्भिः ब्राह्मणेन वेदाध्यायिना विनीतेन विद्यामदहीनेन सदा ब्रह्मनिषेवणा ब्रह्मयज्ञादिपरेण सदा शास्त्रा

योगारंभं कर्मसाध्यं ब्रह्मचर्यं सनातनम् प्रभवः सर्वभूतानां यो विंदति स वेदवित् ५५ स सिद्धः प्रोच्यते लोके सिद्धिरेव न संशयः निर्मुक्तैः
सर्वकर्मभ्यो मुनिभिर्वेदपारगैः ५६ वैष्णवे यज्ञमित्येवं ब्रुवते वेदपारगाः ब्राह्मणा नियमं श्रांता वेदोपनिषदे पदे ५७ जनमेजय उवाच
चेतसस्तूपलंभं हि मनोयाह्यस्य कामतः कारणं श्रोतुमिच्छामि यथा त्वं मन्यसे मुने ५८ वैशंपायन उवाच नह्यस्य कारणं किंचित् बाह्यं भवति
भारत अंतर्गतं कारणं तु शारीरं मानसं नृप ५९ येन वेद्यं विदुर्मर्त्या ब्राह्मणाः संशितव्रताः अवेद्यमपि वेद्यं च शक्यं वेत्तुं न कर्मणा ६० ब्राह्मणेन वि
नीतेन सदा ब्रह्मनिषेविणा सदा विदितत त्वेन सिद्धिहेतोर्महीपते ६१ सदा चैव शुचिर्भूत्वा नियतो ब्रह्मकर्मणा उपतिष्ठेत स गुरुं बद्धांजलिपरो
द्विजः ६२ सायं प्रातश्च तत्सज्ञो मोक्षकर्माणि कारयेत् विनीतो ब्रह्मभावेन समाहितमतिर्मुनिः ६३ संप्रपद्येत मनसा वैष्णवं पदमुत्तमम् ध्याय
न्नेव प्रसीदेत समाहितमतिर्द्विजः ६४ गच्छते परमं ब्रह्म निर्विकारेण चेतसा अपुनर्भवभावज्ञो निर्ममो भावबंधनात् ६५

नार्याभ्यां आत्मानात्मनो र्विदितत त्वेन सिद्धिहेतोर्मोक्षार्थं भवितव्यमिति शेषः ६१ ब्रह्मकर्मणा ब्रह्मण्यर्पितेन कर्मणा नियतः शमादिमान् ६२ गुरुं तत्सज्ञो भू
त्वा मोक्षकर्माणि प्रोक्तान्यासनादिधारणांतानि कारयेत् कुर्यात् विनीतो योगप्राप्तिगर्वहीनः ब्रह्मभावेन न तु सेवकभावेन अथ योन्यां देवतामुपास्ते न्योसावन्योह
मस्मीति न स वेद यथा पशुरेवं स देवानामिति तन्निंदाश्रुतेः ६३ मनसैवेदमाप्तव्यं दृश्यते त्वग्र्यया बुद्ध्येत्यादिश्रुतेः वैष्णवं उत्तमं पदं शब्दं ब्रह्म मनोवृत्त्यैव वेद्यमित्यर्थः
ध्यायन्नेव न त्वश्रुतं विवेकं कुर्वन् मनसो हि प्रसादेन हंति कर्म शुभाशुभं प्रसन्नात्मात्मनि स्थित्वा सुखमक्षयमश्नुत इति श्रुतेर्मनोजय एव कर्मनिर्मूलने हेतुरित्यर्थः ६४ ग
च्छते कर्मव्यतिहारे तङ् यथायं ब्रह्माभिमुखो भवति तथा तथैनं ब्रह्माप्यभिमुखं भवति यथोक्तं वृद्धैः यावद्यावन्निरस्यायं देहादीन्प्रत्यगंचति तावत्तावत्तदर्थोपि स्वमर्थं प्रवि
विशतीति ६५

तदेवेति जीवरूपेणनित्यंवृद्धिह्रासभासमानमपि ब्रह्मतर्हितदेवंअक्षरंन्हासादिरहितंप्रादुर्यदेवकर्मयोगादिनादर्शितंभवतीति ६६ केषांतदक्षरंविदितमतआह ब्राह्मणानामिति पदसंचयेपदानिश्चयेनिमित्तं सर्वद्रव्येभ्योतिरिक्तानांत्यागवतां कामयोगंस्त्र्यादिसंगंविगर्हयंतितेषां ६७ अपुनरिति कथंकर्मयोगेषुपुनर्भवराहित्यप्रतिष्ठितमतआह अनादानेनेति फलस्येतिशेषः कर्मणीतिद्विरुक्तिर्वीप्सार्थासर्वस्मादपिकर्मणःफलाकांक्षांनकुर्यात् यथोक्तंभगवता यत्करोषियदश्नासियज्जुहोषिददासियत् यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणंइति ६८ आदानादिति तत्रानादानंतत्संगत्यापूर्वजन्मसंस्काराच्चभवतितेनक्रियाणामवाप्तिःप्राप्तिर्भवति अन्यथाक्षुद्रफलोपधानेनव्यर्थंकर्मगच्छतीत्यर्थः ६९ अनादानस्यैवमहाफलत्वमाहमुक्तइति तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेनेतिश्रुतेर्विविदिषोत्पादनद्वाराकर्मैवमोक्षहेतुरित्यर्थः ७० इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायांसप्तदशोऽध्यायः १७ ७८ ७

तदेवाक्षरमित्याहुर्यत्तद्ब्रह्मसनातनम् तर्हितत्कर्मयोगेनविद्यायोगेनदर्शितम् ६६ ब्राह्मणानांविनीतानांवैष्णवेपदसंचये सर्वद्रव्यातिरिक्तानांकामयोगविगर्हिणाम् ६७ अपुनर्भाविनांल्लोकाःकर्मयोगप्रतिष्ठिताः अनादानेनमनसाराजन्कर्मणिकर्मणि ६८ आदानाद्बध्यते जंतुर्निरादानात्प्रमुच्यते ब्राह्मणेभ्यःक्रियावाप्तिर्जंतोःपूर्वाज्जनाधिप ६९ मुक्तश्चेंद्रियबंधेनप्राप्तश्चपरमंपदम् नभूयःपुनरायातिमानुषंदेहविग्रहम् ७० इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिनामसप्तदशोऽध्यायः १७ जनमेजयउवाच उपसर्गंचयोगंचध्यातव्यंचैवयत्सदम् नभूयःपुनरायातिमानुषंदेहविग्रहम् १ वैशंपायनउवाच शृणुविस्तरतःसर्वंयथापृच्छसिमेधया उपपन्नेनमनसाब्रह्मादीनामनेकधा २ पंचसिद्धिगुणास्त्यक्त्वापश्यतोब्रह्मणोनृप योगयुक्तेनमनसापंचेंद्रियनिवासिनः ३ ब्रह्मणाश्चिंतयानस्यब्रह्मयज्ञंसनातनम् बहुरूपमनैश्वर्यात्प्रवर्त्ततिनिरोधनम् ४ पंचेंद्रियस्यग्रामस्यनवद्वारस्यभारत कामक्रोधस्यलोभस्यसन्निरुद्धस्यमेधया ५

योगोपसर्गविर्ण्यतेऽथत्रिभिःप्रश्नपूर्वकम् तत्रापिद्वादशेयोगमार्गेयेचिन्हतांगताः १ पूर्वत्राहिंसायोगैरित्यनेनयोगोपसर्गाःसूचिताः आसनानिधारणांतानियोगांतानिचउक्तानिअवशिष्टंयोगस्वरूपंध्येयंब्रह्मयोगसिद्धयश्चतदेतच्चतुष्टयंजिज्ञासमानोजनमेजयउवाच उपसर्गंचेति १ शृण्वेति ब्रह्मादीनांयोगिनामनेकधाजायमानंयोगोपसर्गादिकंयथापृच्छसितथामेधायुक्तेनमनसाशृणु २ पंचेतिपंचसिद्धयोदूरश्रवणाद्याःतासांगुणान्शब्दादीन्पंचेंद्रियेषुनिवसंतीतिपंचेंद्रियैरेवकल्पितानित्यर्थःतान्त्यक्त्वायोगयुक्तेनमनसाब्रह्मणःपश्यतोब्रह्मदर्शिनः ३ ब्रह्मणोब्राह्मणस्यब्रह्मैवयज्ञोब्रह्मयज्ञोब्रह्मैवतंचिंतयानस्यअनैश्वर्यात्परवैराग्यबलाभावात्निरुध्यतेनेनतंनिरोधनंउपसर्गजातंप्रवर्त्ततिप्रवर्त्तते ४ अपरवैराग्येणयइंद्रियादिनिरोधस्यसद्भावेपिपरवैराग्याभावात्योगोनिरुध्यतइत्याह पंचेति पंचेंद्रियप्रधानस्यग्रामस्यदेहेंद्रियप्राणसंघातस्य कामसहितस्यक्रोधस्यमेधयासन्निरुद्धस्यसद्भावेपीतिशेषः

५

तानेवविभ्रमानाह तेजसेति मूर्ध्नि भ्रूमध्ये वा निहितेन तेजसा चक्षुःप्रणिधानेन आधाय चित्तं संयोज्य स्थितस्य योगिनः मूर्ध्नीति हृदयपुंडरीकादेरप्युपलक्षणम् यत्र कुत्रचिदाधारे गुरूपदेशयुक्त्या चित्तं प्रणिधित्सतो योगिनः धूमादिकं गोचरीभवति यच्च मनोमर्कटेन निरोधक्षुब्धेन नाडीमार्गशाखास्वनुक्रमतो नुभूयते तच्च योगसिद्धि-चिन्हं तथा च श्रुतिः तस्मिन्शुक्लमुत नीलमाहुः पिंगलं हरितं लोहितं च एष पंथा ब्राह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्चेति नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशीनां एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे इति च धातुभिः तुल्यव्यवर्णैरिति शेषः ६ ७ ८ निरुध्यते इति गा-ढत्वं दर्शितम् ९ एवं रजःसत्वतमःप्रधानासु नाडीषु संचरद्भिर्विचित्रं पार्थिवैर्धूमादिरूपैरुपेतं भातीत्युक्तं तदेव किंचित्सत्वाधिकाः नाडीः प्राप्य अभास्वरं कृष्णरूपेण गाढतमो वह्निर्भवति तदेतन्मेघधारादिरूपकेणाह तेइति निर्वेमुः वर्षितवंतः वसुधातले देहांतरे च न बहिः १० अत एवाग्नेर्विशेषणं मानसइति ११ १२ एवमग्नेर

तेजसा मूर्ध्नि चाधाय धूमो दोधूयते महान् नीललोहितवर्णाभैः पीतैः श्वेतैश्च धातुभिः ६ मांजिष्ठरागवर्णाभैः कपोतसदृशैस्तथा शुद्धवैडूर्यव-र्णाभैः पद्मवर्णदलप्रभैः ७ स्फाटिकैर्मणिवर्णाभैर्नागेंद्रसदृशैस्तथा इंद्रगोपकवर्णाभैश्चंद्रांशुसलिलप्रभैः ८ बहुवर्णैः सुधूमोघैरिंद्रायुध समप्रभैः संपतद्भिश्च युगपन्मेघैरिव समागमे ९ निरुध्यंत इवाकाशे पक्षवद्भिरिवाद्रिभिः ते धूमवर्णाः संघाता घनाः सलिलधारिणः निर्वेमुश्चै-वतोयौघान्विविशुश्च वसुधातलम् १० मूर्ध्नि चैवं महानग्निर्मानसो धूयते प्रभुः युक्तः परमयोगेन शतशोर्चिभिरावृतः ११ तस्याश्चार्चिर्विस्फुलिंगानां सहस्राणि शतानि च विसस्रुः सर्वगात्रेभ्यो ज्वलन्निव युगाग्नयः १२ यावति वर्षराशौ स्तुतावं त्योच्यो निलस्य च समे पुवारिधाराभि विपुले वसु-धातले १३ वर्णाभ्यां युज्यमानस्य वायुर्दोधूयते महान् दिव्यसिद्धगुणोद्भूतः सूक्ष्मप्राणाविवर्द्धनः १४ वेगवान्भीमनिर्घोषो बलवान्प्राण-गोचरः तैरेव चाग्निसंघातैर्धातुभिः सह संगतः १५ सहस्रशोथ शतशो मूर्तिं कृत्वा पृथग्विधाम् अग्निर्वायुर्जलं भूमिर्धातवो ब्रह्मचोदिताः १६ समवायत्वमापन्ना बीजभूता महीपते संघातब्रह्मवेगेन धातवो गमितान्नृप १७

पितेजोजलादेर्मिश्रीभावः संकीर्णगुणवन्नाडीसंचाराद्बोध्यः यावंतइति

अर्च्यः अर्चिषः ईकारांतत्वमार्षं १३ वर्णाभ्यां जलाग्निवर्णाभ्यां श्वेतलोहिताभ्यां इत्थंभावे तृतीया तद्रूपेण परिणतस्य सत्वोत्कर्षे सति निरूपो वायुरूपं आकाशो भव-ति दिव्याःभित्यादिषु प्रतिघातान्सिद्धाः अनादयः ते च ते गुणाः शब्दतन्मात्रादयः तेभ्य उत्पन्नः स वायुर्न तु स्थूल इत्यर्थः सूक्ष्मः प्राणः सूत्रात्मा तस्य विवर्द्धनः प्रका-शकः १४ वेगेति सः इति च्छेदः हमसिद्धं तैरेव अग्निना संघातो दृढसंश्लेषो येषां तैः भूजलैः धातुभिः संगतः सन्प्राणगोचरः प्राणशब्दवाच्यः सूत्रात्मा भवतीत्य-र्थः वेगवान्मनसोपि जनकत्वात् भीमनिर्घोषः स्थूलाकाशस्यापि जनकत्वात् बलवान्ब्रह्मांडभेदनसामर्थ्यवत्वात् १५ सहस्रशइति धातवो मूर्तिं कृत्वा स्थिता इति शेषः १६ मूर्तिकरणप्रकारमाह समवेति ब्रह्मवेगेन चिदनुप्रवेशेन संघातं गमिताः धावतः समवायत्वं एककार्यकारणत्वं आपन्ना गतवंतः १७ ७ ७

यदितियद्ब्रह्मधारणाविषयाः तदेवसूक्ष्मसदेवचविराट् तयोः सूक्ष्मविराजोः ततोन्यान् तत्तुल्यान् ब्रह्मीभूतयोयोगी सृष्टवानित्यर्थः १८ सएवयोग्योभगवान्-
अलस्तस्यसूत्रादिस्त्रष्टृत्वंयुक्तमित्यर्थः १९ तमितितंयोगिनं मूर्ध्निधातुभिर्निर्द्धं भ्रूघ्राणमध्येसूत्रात्मत्वेनास्थितंब्रह्मचोदिताईशप्रेरिताइतरसुरवादिभोक्तारोजीवाः
प्रविशंति सएवसर्वजीवसमष्टिरित्यर्थः २० अथेति सूत्रात्मभाव्यसाक्षात्कारानंतरं इदमेवकुतइत्यतआह धरणींभित्वास्थूलदेहंविहायब्रह्मसंमिताईशसाम्यंप्राप्ता
मूर्तयः सूत्रविभूतयः चेष्टितुमारब्धाश्चेद्दशदिशः प्रपद्यंते अस्यामवस्थायांयोगीसर्वात्म्यात्सर्वविद्भवतीतिभावः २१ इतीति यतोविद्वान्सर्वात्माइतिहेतोः एते-
पार्थिवाः पृथुभ्योभूतेभ्योजातत्वात् व्यावहारिकार्थब्रह्मणायोगिनैवविनिर्मिताः व्युत्थानेसंप्रज्ञातेच तत्रैवचलयंयांतिसुतेसमाधौचभूमित्वंस्वोपादानत्वंपार्थिवो
घटइवनाशेपृथिवीत्वमितिरूपकेणोक्तं २२ कर्मेतिचाद्विमुच्यंतइत्यनुषज्यते कर्मक्षयाभावेपुनःपुनरुद्भवंतीत्यर्थः २३ कर्मभ्योमुक्ताः क्वयांतीत्यतआह तामे

यद्ब्रह्मचक्षुषोर्मध्येसूक्ष्मः पुरुषोविराट् तयोरन्यान्बहून्सूक्ष्मान्ससृजेपुरुषोत्तमः १८ सएवभगवान्विष्णुर्व्यक्ताव्यक्तसनातनः
आधारः सर्वविद्यानांप्रलयेप्रलयांतकृत् १९ तंमूर्ध्निधातुभिर्निर्द्धं विशंतिब्रह्मचोदिताः तेंतरात्मसुरुषाः सर्वज्ञातारः सुखदुःखयोः २० अथ
चेष्टितुमारब्धामूर्तयोब्रह्मसंमिताः भित्वाचधरणींदेवींप्रापद्यंतदिशोदश २१ इत्येतेपार्थिवाः सर्वेकृषयोब्रह्मनिर्मिताः तत्रैवप्रलयंयांता
भूमित्वमुपयांतिच २२ कर्मक्षयाद्विमुच्यंतेधातुभिः कर्मबंधनैः कर्मक्षयाद्विमुक्तत्वादिंद्रियाणांचबंधनात् २३ तामेवप्रकृतिंयांतिअ-
ज्ञातांकर्मगोचरैः क्षराद्धूमक्षयंचैवअग्निगर्भास्तपोमयाः २४ येनतंतुरिवाच्छिन्नोभावाभावः प्रवर्त्तते धूमादभ्रास्तुसंभूताअभ्रातो
यसुनिर्मलम् २५ जगतीजलात्तुसंभूताजगत्येवचयत्फलम् फलाद्रसस्तुसंजज्ञेरसात्प्राणस्तुदेहिनाम् २६

वेंति कर्मगोचरैः क्षरात्कर्मणः हेतोः धूमक्षयं धूमादिमार्गगम्यस्थानंपुनरावृत्तिफलंयांति तेपियदि अग्निगर्भाअग्निहोत्रादिप्रधानाः तपः कृच्छ्रचांद्रा
यणादितन्मयाभवंतिनान्यथा येनकर्मणाभावाभावः सदसद्रूप संसारः प्रवर्त्ततेयथातंतुरिवअच्छिन्नत्वेन धूमक्षयमेवयांतीति पूर्वेणान्वयः २४
अच्छिन्नत्वमेवाहद्वाभ्याम् धूमादिति धूमादिमार्गेणपितृलोकंगताः कर्मक्षयेततश्च्युताः संत आकाशादिक्रमेण धूमत्वंप्राप्यमेघाभूत्वावर्षधाराभिः
पृथिव्यामन्नभूताइतस्त्वंप्राप्यपुनर्भवंतीत्यर्थः २५ जलात् जलंप्राप्यसंभूतासंयुक्ताफलंव्रीह्यादि जगत्येवपृथिव्येवेतितस्यचेतनत्वंनिर-
स्यति २६ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५

फलादुत्पन्नोरसोरेतः तन्मयंब्रह्मचैतन्यंगर्भः ब्रह्मद्वारैवदेहादेश्चैतन्यंनचेतनांतरसद्भावाकृतम् नान्योतोस्तिद्रष्टेतिचेतनांतरनिषेधात् अतएवब्रह्मैवप्रधानमिति
कारणांतरैर्युक्त्यंतरैः यदितिविशेषाश्चेतनाः बहवः स्युः तर्हिवैधर्म्याभावात्तेषांभेदासिद्धिः यदिसविशेषास्तर्हिसाश्रयनाशमंतरेणविशेषानाशात् मुक्तसिद्धिरित्यादि
भिः २७ कथंतर्हिनिर्विशेषस्यापिसंसारित्वमतआह अव्यक्तादिति अव्यक्तात् मायातः स्वेनभावेनअनादिसंस्कारेण विद्ययाब्रह्माकारचित्तवृत्त्यासहचरंत
प्रकाशमानम् २८ कस्तर्हिकर्त्ताभोक्तेत्यतआह कर्मेतिकर्मदृश्यंकर्तासाभासाहंकारः इदंद्वयमपिविषयस्थमेवनत्वविषयचिदात्मस्थंकर्तुरप्याभासरूपत्वेन
दृश्यत्वात् अनेकधाभासमानमपिचक्षुर्भ्यांनोपलभ्यते मायानगरमिववीतचक्षुर्नोपलभ्यते मायानगरमिवपटलैरधिकारिभिः २९ ज्ञानिभिस्तुतदेवो
पलभ्यतेकर्मद्यात्मनाकनकमिवकुंडलाद्यात्मना तथाचवृद्धवचनंसकलवान्मनसातिगताचितिः सफलवाङ्मनसव्यवहारभागिति यद्वा चक्षुर्भ्यांभ्रुवोर्मध्ये
योजिताभ्यांतस्मात् निःसृतमाविर्भूतंब्रह्मोपलभ्यतइतियोजना ३० पक्षिवदित्यसंगत्वंसूचितम् ३१ प्रादुरिति भूतस्यभूतजातस्यप्रादुर्भावंउत्पत्तिंक्षयंऐ-

रसश्चतन्मयोयज्ञेयत्तद्ब्रह्मसनातनम् प्रधानंब्रह्मचोद्दिष्टंबहुभिः कारणान्तरैः ब्राह्मणैस्तपसिश्रांतैः सत्यव्रतपरायणैः २७ अव्यक्तंव्यक्त-
मापन्नंस्वेनभावेनभारत अंतस्थंसर्वभूतेषुचरंतंविद्ययासह २८ कर्मकर्त्तेतिराजेंद्रविषयस्थमनेकधा नोपलभ्येतचक्षुर्भ्यांतपसादग्ध
किल्बिषैः २९ उपलभ्येतचक्षुर्भ्यांज्ञानिभिर्ब्रह्मवादिभिः निःसृतस्तुभ्रुवोर्मध्यान्मेघमुक्तइवांशुमान् ३० चरद्भिः पक्षिवल्लोकेनिर्द्वंद्वै
र्निष्परिग्रहैः योगधर्मेणकौरव्यध्रुवमासाद्यतेफलम् ३१ प्रादुर्भावंक्षयंचैवभूतस्यनिधनंतथा विधत्तेशतशोब्रह्मासक्षयेचभवेत्तदा
३२ कर्मणःकर्मयोगज्ञोभूतेभ्योनात्रसंशयः अविनाशायलोकस्यधर्मस्याप्यायनेनच ३३ युगंद्वादशसाहस्रंसहस्रयुगसंहितम् ए-
तद्ब्रह्मयुगंनामयुगानांप्रथमंयुगम् ३४ सहस्रयुगयोरंतेसंहारप्रलयांतकृत् सूक्ष्मंभवतिलोकानांनिर्विकारमचेतनम् ३५

श्वर्यंकुर्वद्रूपतांनिधनंनाशंसंक्षयेप्रलयेप्रभवेसृष्टौब्रह्माब्रह्मवित् ३२ जगज्जन्मादिहेतुत्वेनयोगिनऐश्वर्यमुक्त्वाकर्मफलविभाजकत्वेनापितदाह कर्मणइ
ति योगज्ञोभूतेभ्योकर्मणोयोगादेः सुखभाजकत्वंविभजतइतिशेषः धर्मस्याप्यायनेनलोकस्याविनाशायेतियोज्यं अस्यैवप्रीत्यैधर्मः क्रियते अनेनैवप्रीतेनलो
कोरक्ष्यतइत्यर्थः ३३ युगमिति कालमानमविवक्षितं हिंसाशून्यायोगजधर्मएवचतुष्पात् ब्रह्मप्रापकंयुगंसमयः यदेवईदृग्धर्मप्रवणंचित्तंतदेवकृतंप्रवृत्तमि
तिज्ञेयमितिभावः ३४ अनेकैरेवंविधैः कृतैः प्रलयांतकृत् कालस्याप्यंतकर्तासंहारोमहाप्रलयोमुक्त्याख्योभवतियथोक्तंअनेकजन्मसंसिद्ध स्ततोयातिपरांग
तिमिति तदाहिलोकानांस्वरूपंसूक्ष्मंभवतिसत्तामात्रमवशिष्यते तएवनिर्विकारंअचेतनंचचैतन्याभावात् यत्रहिद्वैतमिवभवतितदितरइतरंपश्यतीत्यविद्या
वस्थायांचेतनामुक्त्वायत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिकैवल्येद्रष्टृदृश्ययोर्लोपेननिर्विशेषचिन्मात्रावशेषश्रुतेः ३५ ५ ५ ५

कारणैःसत्वादिभिर्गुणैःनिर्मितंजगदित्यन्वयः तच्चसूक्ष्मंब्रह्मंसंपद्यतेप्रलयमापन्नंसत् ३६ इतिश्रीमहाभा॰ हरिवंशेभविष्यपर्वणि टीकायां अष्टादशोऽध्यायः १८ ॥ युगधर्मायुगेज्ञेयाब्राह्म्येप्रोक्तंकृतेकृतम् कृतंत्रेताद्वापरंचमुनिर्वक्तित्रयोदशे १ भार्गवंशमिति यद्यपिसर्वेयोगीसर्वेर्क्लेशैर्णैवयुक्तोभवति- तथापिपूर्वंमधुकैटभाख्यायिकयायोगिनस्तमोरजोभ्यामपिअभिभूयंतइत्यस्यदर्शितत्वात् यथास्वप्नंभयंमोहंविषादंमदमेवचेत्युक्तानांस्वप्नादीनांलोभःप्रवृत्तिरारंभः कर्मणामशमःस्पृहेत्युक्तानांलोभादीनांचतमोरजःकार्याणांयोगेपिसंभवात् शकृद्सत्वमयेपियोगेधूमादेर्विघ्नस्यदर्शितत्वेदतरत्रतस्यकैमुत्येनासिद्धत्वाच्च पृच्छतिभार्गवंशमिति कृतस्योक्तत्वात् कलेर्वर्तमानत्वात् आद्ययोःत्रेताद्वापारयोरजस्तमसोःप्राकृपराभूतंवंशंकार्यसंततिंश्रोतुमिच्छामि ब्रह्मप्राप्तस्यसगुणब्रह्मविदः १ शृण्विति दैवप्रत्ययसाधिनादिव्यज्ञानसाधनशीलेन २ योगात्मायोगैकनिष्ठचित्तः ब्रह्मरूपेणसंभवआविर्भावोयस्यब्रह्मसंभवः चकारेति भूताथैर्निविवक्षितःकरोतीत्यर्थः ३ उक्तेर्थेहेतुमाह स्थितइतियतःअचलेनैवभावेनब्रह्मासनेब्रह्मस्वरूपेधिष्ठितोपिसहसाक्षिप्तोरजसेतिशेषः अतोभूतानांब-

तथाप्रलयमापन्नंजगत्सर्वंसनातनम् ब्रह्मसंपद्यतेसूक्ष्मंनिमित्तंकारणैर्गुणैः ३६ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिनामाष्टादशोऽध्यायः १८ ॥ जनमेजयउवाच भार्गवंशंश्रोतुमिच्छामिविस्तरेणमहामुने आद्ययोर्युगयोर्ब्रह्मन्ब्रह्मप्राप्तस्यसर्वशः १ वैशंपायनउवाच शृणुविस्तरशःसर्वंयन्मांपृच्छसिमेधया उपपन्नेनमनसादैवप्रत्ययसाधिना २ कृद्धिंशास्तु भगवान्योगात्माब्रह्मसंभवः भूतानांबहुलत्वंचचकारेहेश्वरःप्रभुः ३ स्थितोब्रह्मासनेब्रह्माविक्षिप्तःसहसाप्रभुः अचलेनैवभावेनस्थाणुभूतेनभारत ४ रक्तश्चमोक्षविषयेसच्चज्ञानमयेपदे यस्मात्सदसहस्राणिप्रभवंतिभवंतिच ५ ब्रह्मयज्ञंतुयजतेयोगाद्वेदात्मकंसदा ब्रह्मणोविपुलंज्ञानमैश्वर्यंचप्रवर्तते ६ ततःप्रथममैश्वर्यंयुंजानेनप्रवर्तितम् ब्रह्मणाब्रह्मभूतेनभूतानांहितमिच्छता ७ तदात्वाकाशमैश्वर्यंयुंजानस्यप्रवर्त्तते ब्रह्मणोब्रह्मभूतस्यनिर्विकारेणकर्मणा ८

हुलत्वंकरोतीतिसंबंधः ४ रक्तश्चेति सचविक्षिप्तोमोक्षस्यविषयवत् प्रतिबंधकेपदेज्ञानमयेमनोरथमात्रेरक्तश्चभवतियस्मात् भवंतिउत्पद्यंतेप्रभवंतिस्वकार्यसामर्थ्यवंतिसोपारिशरीरादिवत् अतस्तत्ररक्तत्वंघटतइतिभावः ५ एतच्चैश्वर्यंअप्रार्थितमपिप्रवर्ततेइत्याह ब्रह्मयज्ञमिति यज्ञंसदावेदात्मकंवेदसर्वस्वरूपंब्रह्माख्यंयज्ञंविष्णुंयजतेआराधयतियोगात् योगेनतस्यब्रह्मणोब्रह्मभावप्राप्तस्यतस्मात्स्वयंप्रवृत्तमैश्वर्यंमुमुक्षुणानिरोद्धव्यमिमितिश्लोकद्वयभावः ६ एतच्चैश्वर्यंपरोपकारेनियोजनीयंनस्वार्थमित्याह ततइति ब्रह्मणाब्राह्मणेनयुंजानेनेतिसंबंधः ७ तदेतिनिर्विकारेण रजस्तमोविकारशून्येनकर्मणाप्रत्याहारादिनायुंजानोभवतितदाआकाशमव्याहृतमैश्वर्यंप्रवर्ततेनतुव्याहृतंविक्षेपकम् ८ ॥ ॥ ॥

ततोपिकिमित्यतआह तदेतिसार्द्धेन व्योमसंचिद्रूपं अंतरिक्षमपितदानिर्मलंनिरवद्यंशुद्धंब्रह्मप्राप्तिर्भवति तदेवविशिनष्टिसंहारइतिसर्वेषांषष्ठ्यंतानांसंहारोल
यस्थानंध्रुवंकूटस्थमितिप्रतिपद्यंतिप्रतिपद्यंतेजानंतिवेत्तारः वेदलोचनेनेतिशेषः देहिनःजीवस्य ९ सकामस्तुयोगीवाय्वादिरूपेणभवतीत्याह आकाशेतिसंयु
गेयोगयज्ञे यान्येवसंग्रामनामानितानियज्ञनामानीतिनैघंटकप्रसिद्धेः वादोर्थवादस्तावकोस्यास्तीतिवा दीतेनवादिनाआकाशेश्वर्यंअव्याहतैश्वर्यंतद्भावप्राप्तेन
आकाशैश्वर्यभूतेनप्रवर्त्तमानंब्रह्मकर्तृऐश्वर्यंवायुभूतंकरोतिब्रह्मैश्वर्यवत्वाव्योमसंविदाप्रवर्तमानोयोगीयोगकालेस्वात्मानंवाय्वादिरूपंकरोतीत्यर्थः विकारैःते
जआदिभिःसहेत्यध्याहारः १० संवृत्तैर्निषण्णैरपिविकारैर्निरुद्धैः ध्रुवमैश्वर्यंपूर्वोक्तंनिर्मलंब्रह्म ११ विकारनिरोधेतुकवचवत्स्थूलशरीरत्यागेनआकाश
गमनसदृश्यत्वंचाप्नोतीत्याहद्वाभ्यांशरीरादिति निरालंबान्व्याघ्रादीन् मनसेतिस्वप्रसादृश्यत्वंदर्शितम् १२ १३ ओमिति यंयोगिनंतेसाधवः पश्यंतीति
योजनायेओंकारवाच्यंव्यस्तसमस्तरूपंअउम् ओमित्येवंभूतंविराट्सूत्रांतर्यामिशुद्धस्वरूपंपूर्वस्योत्तरोत्तरत्रप्रविलापनेनअधीयंतेप्राप्नुवंतिश्यत्विकरणस्य-

तदांतरिक्षंसंप्राप्तंनिर्मलंब्रह्मचाव्ययम् संहारःसर्वभूतानांनराणांब्रह्मवादिनाम् ध्रुवमैश्वर्ययोगानांप्रतिपद्यंतिदेहिनः ९ आकाशैश्वर्य
भूतेनसयुगेब्रह्मवादिना प्रवर्त्तमानमैश्वर्यंवायुभूतंकरोतिच १० विकारैर्बहुभिःप्राप्तैःसंपतद्भिर्महाबलैः १० एतैर्विकारैःसंवृत्तैर्नि
रुद्धैश्चसमंततः ध्रुवमैश्वर्यमापन्नःसिद्धोभवतिब्राह्मणः ११ शरीरादभिनिष्क्रम्यआकाशेनप्रधावति निरालंबोनिरालंबानालभ्यमन
साततः १२ ऐश्वर्यभूतोभूतात्माचरन्दिविनदृश्यते चक्षुभिर्बहुभिर्लोकैःपुरंदरसमैरपि १३ ओंकारयेत्वधीयंतेमनसाब्रह्मसत्तमाः
विमुक्ताःसर्वकर्मभ्यस्तंयेपश्यंतिसाधवः १४ एतद्धिपरमंब्रह्मब्राह्मणानांमनीषिणाम् अतश्चरतिभूतानांविद्धिचेतनयासह १५ एषशब्दो
महानादःपुराणोब्रह्मसंभवः वायुभूतोक्षरंप्राप्तोवदत्येवंद्विजातयः १६ अरूपीरूपसंपन्नोधातुभिःसहसंगतः अंतश्चरतिभूतेषुकामका
रकरोवशी १७

गत्यर्थस्यइङोरूपं १४ एतत्प्रणवाख्यंब्रह्मतत्प्रापकत्वात्चेतनयाचिदाभासविशिष्टवृत्त्या १५ ओंकारमेवस्तौतिएषइतिद्वाभ्याम्
एषओंइतिशब्दःमहानादःसर्ववर्णानामभिव्यंजकःपुराणोनित्यःब्रह्मणःसंभवएकीभावोयेनालंदितेनसतयाएतद्वैसत्यकामपरंचापरंचब्रह्मयदोंकारस्त
स्माद्विद्वानेतेनैवायतनेनैकतरमन्वेतीतिश्रुतेः अयमेवपराषश्यंतीसंज्ञकशुद्धशबलब्रह्मात्मासन्वायुभूतोमध्यमारूपः अक्षरंअक्षरत्वंप्राप्तःमातृकामय
वैखरीरूपोभवतीत्याहुर्ब्राह्मणाः १६ अरूपीरूपरहितोप्ययंप्रणवःरूपेणवैखर्यात्मकत्वेनसंपन्नःतत्रहेतुःधातुभिःसहसंगतःअन्नमयंहिसोम्यमनआ
पोमनःप्राणःस्तेजोमयीवागितिश्रुतेर्मनःकायाग्निमाहंतिसप्रेरयंतिमारुतंइत्यादिशिक्षोक्तप्रकारेणतेजोबन्नयोगाच्छब्दोत्पत्तिदर्शनात् अयमेवोपाधेः
सौक्ष्म्यात्जीवरूपेणसूक्ष्मतरत्वाच्चांतर्यामिरूपेणांतर्देहांतःस्थित्वाचरतिविषयान्भुंक्तेयतःकामकारइच्छातत्करःस्वतंत्रेच्छःवशीअसंगः १७ ७

एतदिति एतत्प्रणवात्मकं ब्रह्म पूर्वंशास्त्राचार्योपदेशमनुचिंतयित्वा वेदात्मकंश्रुतिसारभूतंयाज्ञंयोगंचिंतयंतोभावयंतः मनसासंकल्पेनस्वोपाधिरूपेण आसमंता
त्पूरयन्निवपूर्णंकृतवंतइवव्यापकंप्राप्ताइवेत्यर्थः इवशब्दोव्याप्त्यभावसूचकः तेनभित्तिंचित्तवद्व्यापकत्वमपिनास्त्येवेत्यर्थः १८ यशोब्रह्मतेनसहयुंजंतेऐ
क्यंप्राप्नुवंतियशोयुजः समासेपि छांदसोनुम्प्रयतः तदन्वयाः ब्रह्मप्रसूताःसैंधवखिल्यवत्स्वोपादानेएवलीयंतेइत्यर्थः ब्रह्माख्यंलोकम् १९ पदेति प्रसवादा
नेजन्मगृहणानिमित्तंभवजन्मएतेनहिइच्छंतिकिंतुज्ञानार्थमेव २० त्रिभिर्माल्योपहारैर्माल्यवद्धिश्वतैजसप्राज्ञानांउपहारैःसमर्पणैर्विलापनैरितियावत्
प्रतिभावैःप्रतिभासमात्रैःमाल्यैरितिसमासैकदेशस्यापिविशेषणम् २१ ब्रह्मपूर्वाःवेदप्रमाणमेवंपूर्वंमुख्यंयेषांतेयजनंयोगंविक्रमंयोगैश्वर्यंचप्रचक्रिरेयस्मा
त्ब्रह्माब्रह्मवित्वैष्णवंतेजःब्रह्मैवतत्रप्रमाणंवेदोक्तैरितिब्रह्मैवसन्ब्रह्माप्येतीत्यादिभिः २२ ब्राह्मणैर्यथोक्तविशेषणैःधातुभिस्तेजोब्रह्मात्मकैःशरीरद्

एतत्पूर्वमनुध्यायमनसापूरयन्निव वेदात्मकंतदायज्ञंचिंतयंतोमनीषिणः १८ ब्राह्मणाःशुचयोदांतायशोयुंजस्तदन्वयाः ब्रह्मलो
कंकांक्षमाणावैष्णवंपदमुत्तमम् १९ पदहेतोःक्रियाःसर्वाःकुर्वंतिविगतज्वराः नत्वंतेप्रसवादानेभवमिच्छंतिभारत २० त्रिभिर्मा-
ल्योपहारैश्चप्रतिभावैश्चवैद्विजाः यजंतिपरमात्मानंविष्णुंसत्यपराक्रमम् २१ यजनंविक्रमंचैवब्रह्मपूर्वाःप्रचक्रिरे ब्रह्मापिवैष्णवंते
जोवेदोक्तैर्वचनैर्नृप २२ ब्राह्मणैर्ब्रह्मविद्भिश्चब्रह्मज्ञैर्ब्रह्मवादिभिः शुचिभिःकर्मनिर्मुक्तैःसत्यव्रतपरायणैः २३ धातुभिर्मोक्षका
लेचमहात्मासंप्रदृश्यते तदेवपरमंब्रह्मवैष्णवंपरमाद्भुतम् २४ रसात्मकंतदैश्वर्यंविकारांतेप्रदृश्यते घोररूपाविकारास्तेव्यथयंति-
महात्मनः २५ संच्छाद्यातीवतोयेनक्षुभ्यमाणोविचेतनः ऊर्मिभिश्छाद्यतेचैवशीतोष्णाभिर्विकारतः २६ महार्णवगतश्चैवदह्यतेनचसज्ज
ते भग्नाश्चैवमहानद्यःसलिलैर्नैवसीदति २७ सीदमानश्चसलिलेसुशीतात्पात्यतेबलात् आसनाच्छादनाच्चैवमुच्यमानोविचेतनः २८
श्वभ्रेप्रपद्यमानश्चतोयेनपरिषिच्यते शुक्लवर्णैनबहुधास्रोतसामूर्धिसर्वतः २९ ऊर्ध्वज्योतिरवेक्षंश्चशुक्लैःपीतश्चबाध्यते वारिपूरैःसुगंभीरै
विद्युद्भिरिवभासितैः ३०

येनमोक्षकालेपरमात्मासंप्रदृश्यते २३ तदेवरसात्मकंरसोवैसइतिश्रुतेःपरमानंदात्मकंऐश्वर्यंसैषास्यपरमासंपदि
त्यादिश्रुत्यापरमात्मेनस्तुतंविकारांतेविकाराणांपूर्वोक्तानांराजसानांवाय्वादिरूपाणामंतोविलयेसतिप्रकर्षेणदृश्यतेयोगिभिः २४ एवंलोभप्रवृत्यादिजनकानां
राजसविकाराणामंतेपुनःसत्वोत्कर्षादात्मदर्शनमुक्तम् इदानींतामसान्भयादीन्योगविघ्नान्विकारान्प्रस्तौति घोररूपाइत्यादिनाविकाराव्यथयंतीत्युक्तंतांव्य
थामेवाहपंचभिःसंच्छाद्येत्यादिभिः २५ २६ २७ २८ २९ ३० ५ ५ ५ ५ ५ ५ ५

एतैर्विकारैरितिव्याख्यातोर्थः श्लोकः ३१ रसात्मकमितिजिह्वाग्रशब्देनतत्साध्योरसास्वादोलक्ष्यते ततोनेकविधमैश्वर्यंभवति धात्वर्थंशरीरभोगाद्यर्थंस
र्वभूतानामैश्वर्यमितिपूर्वेणान्वयः ३२ ३३ तैजसैश्वर्यप्रयुक्तान्विघ्नानाह तेजसइतिब्राह्मणस्य ब्रह्मविदः कारणेमोक्षसाधनेयोगेस्वस्थःस्वस्थस्येति
आत्मनइत्यस्यविशेषणंस्वशब्दपूर्वात्तिष्ठतेःक्विपङसिअतोधातोरित्यालोपःसोमपावत् ३४ ३५ जिह्वाग्रंविंदतिभवयवशोभिनत्तीत्यर्थः विदिभवय
वेस्यरूपं ३६ ३७ प्रलोभयन् अडभावश्छांदसःलोभयतीत्यर्थः ३८ ३९ तरंतिचयोगिनंजयंतिचेत्यर्थः ४० एतैरितिव्याख्यानं ४१ तदर्चि

एतैर्विकारैःसंवृत्तैर्निरुद्धैश्चैवसर्वशः ध्रुवमैश्वर्यमासाद्यसिद्धोभवतिब्राह्मणः ३१ रसात्मकंतदैश्वर्यंजिह्वाग्रादभिनिःसृतम् सहस्रधारं
विततमेघत्वंसमुपागतम् ३२ रसांश्चविविधान्योगात्ससिद्धःसृजतेप्रभुः धात्वर्थंसर्वभूतानांयोगप्राप्तेनहेतुना ३३ तैजसोरूपमैश्वर्यंवि
कारैःसहवर्द्धते आत्मनोविघ्नजननंस्वस्थोब्राह्मणकारणे ३४ उग्ररूपैर्विरूपैश्चहन्यतेदंडपाणिभिः घोररूपैःसुगंभीरैःपिंगाक्षैर्न्नरवि
ग्रहैः ३५ नेत्रंसमुद्धरन्भीमं जिह्वाग्रंचास्यविंदति नदंतियुगपन्नादंजृंभमाणाःपुनःपुनः ३६ पुनरेवतदाभूत्वा बहुरूपास्तदाभवन् नृत्य
मानाप्रगायंतितर्पयंतोविशेषतः ३७ स्त्रीभूताश्चततःसर्वेयुंजानाश्चावलंबिरे कंठेषुबहुरूपत्वाद्विभेश्चैवप्रलोभयन् ३८ मधुरैरभिधा
नैश्चव्याहरंतीनभीतवत् पतंतियुगपत्सर्वेपादयोर्मूर्द्धभिर्युताः ३९ प्रसादंकांक्षमाणाश्चयोगस्यांतरविघ्नतः बहुप्रकारंकथयन्नृत्यंतिच
तरंतिच ४० एतैर्विकारैःसंवृत्तैर्निरुद्धैश्चैवसर्वशः ध्रुवमैश्वर्यमासाद्यसिद्धोभवतिब्राह्मणः ४१ तदर्चिषइवाग्नेयाआदित्यस्येवरश्मयः
तेजोरूपकमैश्वर्यंजनितास्तेजबिंदवः ४२ ज्योतींषिचैवसंवृत्ताआकाशमुपसंगताः चरंतिलोकेसततंसूर्यचंद्रमसोज्जितम् ४३ चंद्रसू
र्यात्मिकंदिव्यंज्योतिश्चाह्नमुत्तमम् एतद्विभ्राजतेलोकेकालचक्रंध्रुवंपरम् ४४ अर्धमासाश्चमासाश्चऋतुःसंवत्सराण्यथ क्षणालवामु
हूर्ताश्चकलाःकाष्ठास्तथैवच ४५ अहोरात्रप्रमाणंचनिमिषोन्मेषणंतथा ताराणांगतयश्चैवग्रहाणांचविशेषतः ४६ अथपार्थिवमैश्व
र्यंविकारग्रहसंभवं योगयुक्तास्त्वाभियस्ताःयास्तंतेह्यचलासनात् ४७ अलोभाच्छिद्यतेसद्योवेपमानोनुकीर्त्यते सीदतेवसुधामध्येभि
द्यमानःपुनःपुनः ४८ भूतानांबहुरूपैश्चअन्यैश्चतत्रवासिभिः विषयैर्युज्यतेक्षिप्रंसंक्षेपात्समवरुध्यते ४९

षइतितत्तत्रतेजोरूपाअपितएवजलबिंदवो
भवंति ४२ गुणैःसत्वादिभिःसंवृताःयोगिनःज्योतींषिसंवृताःभवंति ४३ चंद्रसूर्यात्मकंप्राप्यसघनंसमेघमंडलंकालचक्रंध्रुवंअभिलक्ष्यचरन्सएवभवतिसएवका
लस्यप्रवर्त्तकोभवतीत्यर्थः ४४ अर्धमासादिरूपश्चायमेवभवतीत्याहार्द्धेति ४५ ४६ अथेतिविकाराःरजस्तमोमयास्तेषांग्रहस्वीकारस्तत्संभवम् ४७ अलोभात्
छिद्यतेऐश्वर्यमितिशेषः वेपमानोविघ्नात्भीतस्तुअनुकीर्त्यतेवाच्योनिंद्योभवतीत्यर्थः ४८ संक्षेपात्समवरुद्धातइत्यक्षराधिक्यमार्षम् ४९ ७ ७

५० ५१ एभिःभौमैः ५२ ततइति विकारतोनिर्मुक्तस्यपार्थिवमैश्वर्यमाविर्भवति ५३ समाधौसंजातेविकारेचप्रलयंगतेसातिदिव्यगंधादिसंविदोभवती-
त्याहसार्द्धेनदिव्यपुरुषैःमुक्तैःसहभिद्यतेयावद्देहपातंऊर्ध्वंतुनभिद्यतेकैवल्येएकात्म्यप्राप्तेः ५४ अंतःगच्छन्सुसूक्ष्मतिनामंतःकरणमपिप्रविशतियतःप्रधाना
त्माप्रधानजयीक्षरन्निवप्रधानवत्परिणप्रमाणइतिसर्वंतिःकरणरूपोभवतीत्यर्थः ५५ इतिश्रीमहाभारतेहरिवंशेभविष्यपर्वणिटीकायामेकोनविंशोऽध्या
यः १९ ॥ ॥ चतुर्दशेपृथक्भूतधारणाभीतिदायतः अंतःसूक्ष्मेमनोधार्यमभयायेतिवर्ण्यते १ ततइति यतोभेददर्शनमयीएकैकभूतधारणाक्षुद्र-
फलदायोगविघ्नकरीचपूर्वोक्तरूपेणततोहेतोःअन्यांतद्विपरीतांअहमेवेदंसर्वोस्मीतिमन्यतेसोस्यपरमोलोकइतिश्रुतिप्रसिद्धांसमष्टिधारणांगत्वाप्राप्यततोव्यापकःस
र्वात्माभवतीतिशेषः पितामहःउक्तरीत्याशुद्धचिन्मात्ररूपोपिसन्मनसाउपाधिनैवसर्वात्म्यंगतःनतुस्वतःकीदृशेनमनसाब्रह्मकर्मब्रह्मप्रापकंकर्मउक्तविधंआसनादि
धारणांतंसमारंभंसम्यगारभ्यआरंभमितिणमुलंतंनिर्मुक्तेनबाह्यरूपादिभ्यःव्यावृत्तेनएतएवांतरात्मनाअंतरेवहार्दाकाशादौआत्मास्वरूपमस्यास्तिनबहिश्च

ततःपार्थिवमैश्वर्यंसेवमानश्चसर्वतः मूर्तिमद्भिश्चबहुधाधातुभिःसचहन्यते ५० शक्तितोमरनिस्त्रिंशैर्गदाभिश्चाप्यनेकधा असिभिःपा
त्यतेचैवक्षुरधारैःसहस्रशः ५१ भिद्यतेचैवबाणाग्रैःसुतीक्ष्णैर्मर्मभेदिभिः एभिर्विकारैर्निर्वृत्तैर्निरुद्धैश्चैवसर्वशः ५२ ध्रुवमैश्वर्यमापन्नः
सिद्धोभवतिब्राह्मणः ततःपार्थिवमैश्वर्यंनिर्मुक्तस्यविकारतः ५३ प्रादुर्भवतिसंजातेसमाधौप्रलयंगते दिव्यंगंधंसमाघ्रायदिव्यार्थांस्तान्
शृणोतिच ५४ दिव्यरूपैश्चपुरुषैश्छिद्यतेनचभिद्यते गच्छन्सुसूक्ष्मतिनाचांतःप्रधानात्माक्षरन्निव ५५ इतिश्रीमहाभारतेखिलेषुह
रिवंशेभविष्यपर्वणिनामएकोनविंशोऽध्यायः १९ ॥ वैशंपायनउवाच ततोन्योधारणांगत्वामनसास्सपितामहः ब्रह्मकर्मस
मारंभंनिर्मुक्तेनांतरात्मना १

क्षुरादिद्वाररूपादौ इदमत्रतत्त्वं इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः मनसस्तुपराबुद्धिर्योबुद्धेःपरतस्तुसइत्यादिश्रुतिभ्यः
सर्वेभ्यःसूक्ष्मतमःपरमात्मा अर्थास्तुइंद्रियेभ्यःसूक्ष्माअपितैर्गृहीताःसंतोलोचनोत्तेजनेनप्रुक्तकाक्षराइवस्थूलाएवावभासंते तथाआत्मानतिरिक्ताअप्यतिरिक्ता
वभासंतेस्वकरइवदर्पणेनबालस्य अन्यथायोगिनःसमाधौसार्वज्ञंनस्यात्सर्वस्यस्वरूपादन्यत्वेनकस्मिन्नुभगवतोविज्ञानेसर्वमिदंविज्ञातंभवतीत्येकविज्ञाना-
त्सर्वविज्ञानप्रतिज्ञाश्रुतेरुपरोधश्चस्यात्योगिनांसार्वज्ञंस्यसर्वसंमतत्वाच्चनतदपलापःकर्तुंशक्यःतस्मादिंद्रियाणामुपसंहारे अर्थानांस्थूलत्वमनात्मत्वंचापग-
च्छतीतियुक्तमुक्तमन्यांधारणांगत्वाततोव्याप्तोभवतीति सूक्ष्मत्वंचात्रकालिकपरिणामराहित्यं तथाहिकनकादेःकुंडलादिधर्मपरिणामःस्वरूपविनाशोपिरूपांत
रापत्तिरूपःतथाकुंडलादेःउत्पत्तेःप्रागूर्ध्वंचानागतत्वातीतत्वरूपौउत्पन्नोवर्तमानस्वरूपश्चेतित्रेधालक्षणपरिणामःस्वरूपप्रच्यवाप्रच्यवासिद्धिरूपःतथाउ

त्सन्नस्यनूतनत्वपुराणत्वाद्यवस्थापरिणामः स्वरूपोपचयापचयलक्षणः एतौद्वावपिकालाधीनावेव अतएवसूक्ष्मेउक्तरूपेसर्वसर्वत्रसर्वदासाविविस्थमस्तीति तद
वस्थानांयोगिनांतस्यापरोक्षमितिप्रसिद्धं अतःसमष्टिसूक्ष्मेचित्तधारणांश्रेयस्करीधारणांतरेषुभेदहृष्टिगर्भेतेषुभयादिदर्शनात् यन्मदन्यन्नास्तिकस्मान्नुबिभे
मीतितएवास्माकंभयंविहायकस्माद्विभेष्यंतिद्वितीयाद्वैभयंभवतीतिश्रुतेरस्यांतददर्शनाच्च १ अस्याःफलमाह सर्वांगधारणांसर्वअंगेषेवास्यास्तिसासर्वांगः
सूत्रात्माप्रहसन्निवप्रौढ्यमाहात्म्येनविस्मयात् मनसेत्यस्याहृत्वासूत्रात्मतायाःसृज्यस्यचकल्पितत्वमुक्तम् ब्रह्मणिसूत्रेयोगऐक्यंब्रह्मयोगस्तेन २ चक्षुषेति
अत्रअंगविशेषोनविवक्षितः सर्वस्यांगस्यसर्वात्मत्वेनसर्वेप्सितहेतुत्वौचित्यात् अप्सराइतिआकारांतत्वमार्षं अप्सरासुचयामेधेतिदर्शनाद्वा ३ ४ ५ स्व
क्षांदिव्यलोचनरूपांशुचिगिरंनिष्कलंकांवेदवाणींसाहिश्रीर्ब्रह्मविदांऋचःसामानियजूंषिसाहिश्रीरमृतासतामितिश्रुतेः ६ ससृजेसृष्टिरत्रसंप्रदायप्रवृत्तिमात्रं

सर्वांगधारणांकृत्वामनसाप्रहसन्निव ब्रह्मयोगेनचब्रह्मासृजतेमनसाप्रजाः २ चक्षुषारूपसंपन्नाह्यप्सरासृजतेप्रभुः नासिकाघ्राच्चगं
धर्वान्स्रक्चित्रांबरवाससः ३ तुंबुरुप्रमुखान्सर्वान्शतशोऽथसहस्रशः नृत्यवादित्रकुशलान्कुशलान्सामगीतिषु ४ ब्रह्मयोगेनयोगज्ञः
स्वयंभूर्भगवान्प्रभुः चारुनेत्रांसुकेशांतांसुभ्रूंचारुनिभाननाम् ५ पद्मेनशतपत्रेणचारुणासुविराजिताम् स्वक्षांशुचिगिरंसेव्यांब्राह्मींमूर्ति
मतांश्रियम् ६ ससृजेमनसाब्रह्मासम्यक्प्रोक्तेनचेतसा भावयोगेनभूतात्मासर्वप्राणभृतांनृप ७ चक्षुषोरूपसंपन्नासृजत्सोप्सरसःप्र
भुः नासिकाघ्राच्चगंधर्वान्सुवासःसुप्रवादितान् ८ नागप्रभाषसंचक्रेगंधर्वाणामशेषतः अन्येषांचैवविप्राणागानंब्रह्मप्रभाषितं ९
पद्भ्यांसृजतिभूतानिगतिमंतिध्रुवाणिच नरकिन्नरयक्षांश्चपिशाचोरगराक्षसान् १० गजांसिंहांश्चव्याघ्रांश्चमृगांश्चैवसहस्रशः तृण-
जातीश्चबहुधाभावहेतोश्चतुष्पदान् ११ येतुहस्तान्निरवादंतिकर्मप्रासेनहेतुना हस्तेभ्यःकर्मससृजेमंत्रवान्मनसातथा १२ वायुनास
विसर्गंचभूतानांसुखमिच्छता उपस्थेनतदानंदपंचेंद्रियसमाधिना १३

नत्वभिनवोत्पत्तिःवाचाविरूपनित्ययेतिवेदस्यनित्यत्वश्रवणात् अतएवप्रोक्तेनेतिविशेषणं-
ईश्वरप्रोक्तेनेत्यर्थः योवैवेदांश्चप्रहिणोतितस्मैइतिसिद्धप्रधानश्रवणात् अस्यैवसर्वेश्वरत्वात् जीवानामाशयानुरोधेनायंसृजतिनस्वस्यभोगार्थमित्याह भावेति ७
८ गानंप्रभाष्यतेव्युत्साद्यतेनेनेतिगानंप्रभाषंगांधर्वशास्त्रं तथाब्रह्मणिवेदेप्रभाषितंगानंसामाख्यंचक्षुषइतिश्लोकद्वयंपूर्वोक्तस्यैवविवरणम् ९ १० ११
येतुहस्तान् हस्तेआदायल्यब्लोपेधिकरणेपंचमी हस्तेतिपाठेविश्वाभूतानीतितद्विभक्तेःपूर्वरूपमार्षं निरवादंतिभक्षयंति कर्मप्रासेनकर्मलब्धेनहेतुनाकारणे
नअदृष्टेन १२ वायुनाप्राणादिरूपेणविसर्गंविविधंप्राणनादिकार्यसृष्टीनांससृजेइतिपूर्वेणान्वयः एवंराजसींसृष्टिंकुर्वतःकथंमुक्तिःस्यादित्याकुलमाश्वासयति
पंचेंद्रियाणांसमाधिनिरोधस्तेनहेतुनाआपरमात्मानंउपलक्ष्यतेनतस्येत्थितं लीलयासृष्टिंकुर्वन्नपिब्रह्मसामीप्यंप्राप्तत्वान्मुक्तएवेत्यर्थः १३ ७ ७

गावः गाः प्रथमाद्वितीयार्थेवर्वेषैरेवनदवत् नतुपरिणामैः यदवोचंमूलकारणमेवांत्याकार्यान्तरइवतत्तद्रूपेणभातीतितदितएवोस्थितम् १४ व्यतिषिक्तानिमिश्रिता
निषट्इंद्रियाणियस्यसव्यतिषिक्तषडिंद्रियस्तं अस्माकंहिशब्दादयः श्रोत्रादीनांप्रतिनियताःविषयाःसर्वात्म्यकालेतुसर्वमिंद्रियंसर्वविषयग्राहकंभवति य
थोक्तंवासिष्ठेसर्वात्मानितुयत्रैवछायातत्रैवचातपः नसंभवतिचेत्तत्सकथंसर्वात्मतामियादिति १५ तमंगिरसंभ्रुवोंतरे १६ भृगुंललाटमध्यात् नारदंसनत्कुमा
रंचमूर्ध्नः १७ १८ १९ २० तत्रेतिस्थानानि आदित्यादीनांद्युप्रभृतीनियोगान् अहोरात्रादिनिवर्त्तनाधिकान् २१ एषआत्मोपादानकसृष्ट्या-
दिप्रपंचेनआसनध्यानसमाधिविधानेनचप्रपंचितोब्रह्मप्रापकत्वाद्ब्रह्ममयोयंज्ञानयज्ञउक्तइतिशेषः अयमेवयोगोयोगशास्त्रः सांख्यनामावेदांतजन्यज्ञान-

हृदयादसृजद्भावोबाहुभ्यांपक्षिणस्तथा अङ्गानिचैवसत्वानितैस्तैर्भेदैःपृथग्विधैः १४ ऋषिमंगिरसंचैवमुनिंज्वलिततेजसम् ब्रह्मवं
शकरंदिव्यंव्यतिषिक्तंतदिंद्रियम् १५ भ्रुवोंतरादजनयद्योगाद्योगेश्वरःप्रभुः ब्रह्मवंशकरंदिव्यंगुरुपरमधार्मिकम् १६ ललाटम-
ध्यादसृजन्नारदंप्रियविग्रहम् सनत्कुमारंमूर्ध्नश्चमहायोगीपितामहः १७ अभिषिक्ततुसोमंचयौवराज्येपितामहः ब्राह्मणानांच
राजानंशाश्वतरजनीश्वरम् १८ तपसामहतायुक्तोग्रहैःसहपुरःसरः चचारनभसोमध्येप्रभाभिर्भासयन्जगत् १९ सगात्रैर्भग
वान्योगान्मनसासिद्धिमागतः सृष्टवान्सर्वभूतानिस्थावराणिचराणिच २० तत्रस्थानानिभूतानांयोगांश्चैवपृथग्विधान् निधत्तेशत
शोब्रह्मासर्वभूतपितामहः २१ एषब्रह्ममयोयज्ञोयोगःसांख्यश्चतत्वतः विज्ञानंचस्वभावश्चक्षेत्रंक्षेत्रज्ञएवच २२

मप्ययमेव नतुउक्तनयो
र्विरोधःपुरुषैकत्वानेकत्वप्रकृतिमिथ्यात्वामिथ्यात्वरूपइतिचेन्नयोगैरपिगुणानांपरमंरूपंनदृष्टिपथमिच्छति यत्तुदृष्टिपथप्राप्तंतन्मायैवतुच्छकमितिदृश्य-
स्यभेदप्रकृत्यादेस्तुच्छत्वाभ्युपगमात् अत्यल्पमिदमुच्यतेवेदबाह्याअपिविज्ञानवादिचार्वाकादयोपिनानेनसिद्धांतेनविरुध्यंतेसर्वेषांमोक्षस्यैकरूपत्वा
दित्याहविज्ञानंविज्ञानवादिनांसिद्धांतःस्वभावःस्वभावादीनांचार्वाकाणांसिद्धांतःक्षेत्रंप्रकृतिःक्षेत्रज्ञःपुरुषःनिरीश्वरसांख्यसिद्धांतोप्ययमेवेत्यर्थः २२ ७

एकत्वंचपृथक्त्वंचेतिज्ञानाज्ञानसमयभेदेनवाजगन्मिथोभिन्नमभिन्नमीश्वरादितिकापालिकमतेनवाएतत् ज्ञेयम् संभवोनिधनंचयोग एवएषब्रह्ममयो
यज्ञः अज्ञातश्चेज्जन्मप्रदः ज्ञातश्चेज्जन्महंतेत्यर्थः योगोहिप्रभावाप्ययावितिश्रुतेः कालविदांकालाख्यईश्वरोप्ययमेवतत्प्रकाशत्वात् कालस्यक्षयोय
स्मिन् सतिभवतितादृशंविशिष्टंअनुभवपर्यवसायिज्ञानंविज्ञानंआत्मानुभवोप्ययमेवज्ञेयमितिसर्वत्रसंबंधनीयंएतेनसर्वतंत्रसिद्धांतानांमुक्तावेकरू
प्यंदर्शितम् तथाचवीतहव्यंसमाधिंप्रकृत्यदृहृह्यासिष्टेदर्शितम् यच्छून्यवादिनांशून्यंयद्ब्रह्म ब्रह्मवादिनांविज्ञानमात्रंविज्ञानविदांयदमलंपदम् पुरुषः सां
ख्यदृष्टीनामीश्वरोयोगवादिनाम् शिवः शैवमतस्थानांकालः कालैकवादिनां आत्मात्मनस्तद्विदुषांनैरात्म्यंतादृशात्मना मध्यंमाध्यमिकानांचसर्वःसुसमचे
तसाम् यत्सर्वशास्त्रसिद्धांतोयत्सर्वहृदयानुगम् यत्सर्वंसर्वगंसर्वंयत्तत्सतदसौस्थितइत्यंतेन पाद्येमाघमहात्म्येपि भूतयोगजचैतन्यंचार्वाकास्त्वामुपास
ते सौगतास्त्वुवतेतर्कैस्त्वांबुद्धिंबोधलक्षणम् शरीरपरिणामंत्वामन्यंतेजिनदेवताः ध्यायतिपुरुषंसांख्यास्त्वामेवप्रकृतेः परम् जन्मादिरहितंपूर्णंसच्चिदानं

एकत्वंचपृथक्त्वंचसंभवोनिधनंतथा कालःकालक्षयश्चैवज्ञेयोविज्ञानमेवच २३ इतिश्रीमन्महाभारतेखिलेषुहरिवंशेभवि-
ष्यपर्वणिनामविंशतितमोऽध्यायः २० ॥ ॥ जनमेजयउवाच श्रुतंब्रह्मयुगंब्रह्मन्युगानांप्रथमंयुगम् क्षत्रस्या
पियुगंब्रह्मन्श्रोतुमिच्छाम्यहंप्रभो १ ससंक्षेपंसविस्तारंनियमैर्बहुभिश्चितम् उपायज्ञैश्चकथितंक्रतुभिश्चैवशोभितम् २

दलक्षणम् त्वामौपनिषदाब्रह्मचिंतयंत्यनिशंविभो इत्यादि तस्मादयोयमुक्तोयोगयज्ञः सएवसर्वतंत्रसिद्धांतइतिसर्वैरभणीयम् समाप्ताब्रह्मविद्या अतः
परंधर्मचर्चाभविष्यति परैरदर्शितःपंथापौर्वापार्यबलान्मया यथाकथंचिदुन्नीतःपंडिताःशोधयंतुतम् २३ इतिश्रीमहाभारतेहरिवंशेभविष्यप
र्वणिटीकायांविंशतितमोऽध्यायः २० ॥ ॥ ॥ जीवन्मुक्त्यैब्रह्मतत्त्वंचतुर्दशभिरीरितम् अथद्वादशभिर्धर्मंप्रब्रवीतिक्रममुक्तये १
श्रुतमिति ब्रह्मयुगंब्रह्मप्राप्तिहेतुत्वात्प्रथमंयुगंकृतंयत्रसर्वधर्मफलंतत्प्रभवैः यथाकृतायविजितायाधनेयाःसंयंत्येवमेवैनंसर्वंतदभिसमेतियत्किंचप्र
जाःसाधुकुर्वंतीतिकृतायनिदर्शनेनश्रुत्याप्रोक्तः क्षत्रस्यधर्मस्यतदेतत्क्षत्रस्यक्षत्रंयद्धर्मइतिधर्मस्यमुख्यक्षत्रत्वश्रवणात् युगंयुज्यतेअनेनतद्युगंस्व
र्गादिप्रदत्वलक्षणंमाहात्म्यम् श्रोतुमिच्छामि १ एतदेवविशिनष्टि ससंक्षेपमिति २ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एतदितिएतत्‌धर्मस्यमाहात्म्यम्‌ यज्ञकर्मभिः यज्ञात्मकमेवकर्मयेषांनतूपास्याद्यात्मकंतेयज्ञकर्माणः कर्मठाः तैरर्चितंपूजितंदानधर्मैःउच्चादिविदक्षिणावंतोअस्थुर्येअ-
श्वदाःसहतेसूर्येण हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुरितिश्रुतेदीनजप्रभावैःप्रजाभिःयस्मिंजातएतामिष्टिंनिर्वपतिपूतएवसतेजस्वान्नादइंद्रियावीप
शुमान्‌भवतिपुत्रकामाहाह्याख्यापयेरन्‌लभंतेहपुत्रानितिजातेष्टिशौनःशेपाख्यायनफलैःप्रजादिभिरुपशोभितम्‌ ३ तेइति तेब्राह्मणाहत्तसंपन्नाज्ञानसिद्धाः
समाहिताभवंतीतियोजनाकेतेयेअंगुष्ठमात्राइत्यल्पप्रमाणत्वेनउत्क्रांत्यादियोग्याःअंगुष्ठमात्रंपुरुषंनिश्चकर्षयमोबलादित्यारण्यकोक्तेःनतुयएवंवेदाहंब्रह्मास्मीति
सइदंसर्वेभवंतीतिश्रुतिप्रसिद्धविद्याफलसर्वात्म्यभाजःतेयज्ञकर्माणःविशिष्टधर्मेणसूर्यरश्मिभिरादत्ताःसूर्यमंडलंभित्वाब्रह्मलोकंगताअपीत्यर्थः मोक्षप्रासे-
नमोक्षप्रत्यासंनेनविधिनायथाशास्त्रं ४ प्रवृत्तेयज्ञादौअप्रवृत्तेशमादौब्रह्मपरायणाःवेदैकशरणाःपरायणस्यब्रह्मणःकर्मणिषष्ठीसंगस्यईश्वरप्रीतिमुद्दि
श्यवेदोक्तकर्मपराइत्यर्थः५ ६ वित्तसंपन्नाःश्रीवृताःश्रियाऋचःसामानियजूंषिसाहिश्रीरमृतासतामितिश्रु त्यावृताःसहजाःपुरवधिब्रह्मलोकेस्थितापूर्वस्मिन्क

वैशंपायनउवाच एतत्तेकथयिष्यामियज्ञकर्मभिरर्चितम्‌ दानधर्मैश्चविविधैःप्रजाभिरुपशोभितम्‌ ३ तेंगुष्ठमात्रामुनयआदत्ताःसू
र्यरश्मिभिः मोक्षप्रासेनविधिनानिराबाधेनकर्मणा ४ प्रवृत्तेचाप्रवृत्तेचनित्यंब्रह्मपरायणाः परायणस्यसंगम्यब्राह्मणस्तुमहीपते ५
श्रीवृत्ताःपावनाश्चैवब्राह्मणाश्चमहीपते चरितंब्रह्मचर्यश्चब्रह्मज्ञानावबोधिताः ६ पूर्णेयुगसहस्रांतेप्रभावेप्रलयंगताः ब्राह्मणावि
त्तसंपन्नाज्ञानसिद्धाःसमाहिताः ७ व्यतिरिक्तेंद्रियोविष्णुर्योगात्माब्रह्मसंभवः दक्षःप्रजापतिर्भूत्वासृजतेविपुलाःप्रजाः ८ अक्षरा
ब्राह्मणाःसौम्याःक्षरात्क्षत्रियबांधवाः वैश्याविकारतश्चैवशूद्राधूमविकारतः ९ श्वेतलोहितकैर्वर्णैःपीतैर्नीलैश्चब्राह्मणाः अभिनि-
र्वर्तितावर्णाश्चिंतयानेनविष्णुना १० ततोवर्णत्वमापन्नाःप्रजालोकेचतुर्विधाः ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवमहीपते ११ एक-
लिंगाःपृथग्धर्माद्विपादाःपरमाद्भुताः यातनायाभिसंपन्नागतिज्ञाःसर्वकर्मसु १२

ल्पेयेलयंगतास्तेऽग्निमकल्पेउक्तविशेषणविशिष्टाब्राह्मणाभवंति ७
व्यतिरिक्तेति तेषांब्राह्मणानांमध्येयोयोगात्मासन्‌व्यतिरिक्तेंद्रियोदेहेंद्रियासंगेनस्वप्नेइवांतःप्रज्ञोभूत्वाचतुर्भुजादिलक्षणंविष्णुंआत्मत्वेनाभिमन्यतेसोपिभेदद
र्शीसिमस्युपास्तिराहित्यात्‌ ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे परस्यांतेकृतात्मानःप्रविशंतिपरंपदमितिस्मृत्युक्तक्रमसुक्त्यनधिकारादस्मिन्कल्पेब्रह्मपुत्रोद
क्षोभूत्वाप्रजाःसृजते ८ अक्षरंशुद्धसत्वमयत्वान्निष्कामोधर्मःश्वेतःसुधावत्‌ क्षरंसत्वरजोमयत्वादुभयमिश्रोधर्मःरक्तःतदुभयसंघातवत्‌ विकारोरजोम-
यत्वान्सकामोधर्मःपीतोहरिद्रावत्‌ धूमःतमोमयत्वात्‌विधर्मःकृष्णःधूमवत्‌ ९ १० ततइतिततोगुणावर्णेपिचारात्‌ ११ एकलिंगाःतुल्याकृतयःयातनायकर्मफ
लभोगायसंपन्नास्तेनतेनवर्णेन १२

येनकारणेनत्रयाणामेववेदप्रोक्ताः क्रियाः स्मृतास्तेनकारणेनवः युष्माकंत्रयाणांब्राह्मणक्षत्रियविशामेववैष्णवेनयोगेनब्रह्मास्तिविष्णुभक्त्यावेदोस्तीतित्रैवर्णिक
त्वंभगवद्रूपैकलभ्यमित्यर्थः १३ प्रज्ञयेति तेजसाऐश्वर्येणज्ञानैश्वर्ययोगात् प्राचेतसोदक्षः प्रभुर्विष्णुरेव यस्मात्सूर्वोक्तिव्यतिरिक्तषडिंद्रियतादिविशिष्टस्त
स्मात् तथाचबहुप्रजानिर्ऋतिमावेतीतिश्रुतेः बहुप्रजात्वाद्दक्षः संसार्येवस्यादितिनशंकनीयमितिभावः कीदृशोदक्षः कर्मणामंतरंगतः अधिकारप्रदकर्मपाशा
वगुंठितः सृष्टिकरोतिनतुतस्याज्ञानमस्तीत्यर्थः एतेनजीवन्मुक्तानामपिकर्मपाशानुवृत्तिर्दर्शिता १४ प्रकृतमनुसरति ततइति निर्माणंशिल्पंत्रैवर्णिकसेवा
करणंवातदर्थमेवसंभूताः संस्कारंउपनयनंब्रह्मवेदः १५ १६ असंस्कृतंसंस्काराभावस्तेनहेतुनावेदप्रोक्तेनधर्मेणनोपयुंजतीति पूर्वश्लोकगतक्रिययान्वयः
१७ ततोन्येब्रह्मणोवेदस्ययोनयः स्थानभूताब्राह्मणाइत्यर्थः १८ दक्षिणाः समर्थाः भोपुत्राः अहंभवतांमुखात् धात्र्याः युष्मच्छरीरजनित्र्याः अंतंसिद्धांतं-

त्रयाणांवर्णजातानांवेदप्रोक्ताः क्रियाः स्मृताः तेनब्राह्मणयोगेनवैष्णवेनमहीपते १३ प्रज्ञयातेजसायोगात्तस्मात्प्राचेतसः प्रभुः विष्णुरेवमहा
योगीकर्मणामंतरंगतः १४ ततोनिर्माणसंभूताः शूद्राः कर्मविवर्जिताः तस्मान्नार्हंतिसंस्कारंनह्यत्रब्रह्मविद्यते १५ यथाग्नौधूमसंघातोह्य
रण्यामथ्यमानया प्रादुर्भूतोविसर्पन्वैनोपयुंजतिकर्मणि १६ एवंशूद्राविसर्पंतोभुविकार्त्स्न्येनजन्मना नासंस्कृतेनधर्मेणवेदप्रोक्तेनकर्म
णा १७ ततोन्येदक्षपुत्राश्चसंभूताब्रह्मयोनयः बलवंतोमहोत्साहामहावीर्यामहौजसः १८ पित्राप्रोक्तामहात्मानोदक्षिणायज्ञकर्मणा
अंतमिच्छाम्यहंश्रोतुंधात्र्याः पुत्राबलोह्यहम् १९ ततोविधास्येतत्वज्ञः प्रजानांविपुलंबलम् विपुलत्वाद्धिक्षेत्राणाममापिविपुलाः प्रजाः २०
नतेषांदर्शयद्देवीचक्षुषारूपमात्मनः प्रजापतिसुतानांवैविपुलासारमिच्छताम् २१ आत्मनोभावनिर्वृत्तेभावेकृतयुगेतदा जनित्रीसर्वभूतानामंड-
जानुद्भिज्जांस्तथा २२

श्रोतुमिच्छामि अतोमह्यंधात्र्यंतंकथयतेतिभावः यतोहंबलोबलवानस्मिधात्र्याअंतंज्ञातुंसमर्थोस्मितस्माद्भवद्भिरपिमादृशैर्भवितव्यमितिभावः
१९ ततइति युष्मत्तोधात्र्यंतंश्रुत्वाभवदीयबलाबलतत्वंज्ञात्वाबललपक्षेप्रभवतांविपुलंविधास्ये तवकुतएतावद्बलमित्यतआह क्षेत्रवैपुल्यात् बलवैपुल्यंअन्यथाल्प
मितिमशकमतंगजशरीरेदृष्टं एवंबद्भिः प्रजाः सृजतोममबलमस्ति तस्माद्धात्र्याः स्वरूपंज्ञात्वासृष्टौप्रवर्त्तितव्यंअन्यथासृष्टिसंगेनदुष्यत्येवेतिभावः २० विपुलाया
मायायाः सारमिच्छतांतेषांदक्षपुत्राणांदेवीधात्रीआत्मनोरूपंचक्षुषाप्रमाणज्ञानेननदर्शयत् नंदर्शितवतीअडभावआर्षः नहिमायाप्रमाणेनपरीक्षितुंशक्यातम
इवदीपेन अनिरीक्ष्यमाणैवतेषांमायाबाधिताभूदितिभावः २१ आत्मनइतितेषांप्रजापतिसुतानांकृतयुगेभावेविशुद्धसत्वमयेभावेधात्र्यवलोकनेनजातेसति
मात्राप्रमात्राचेतनेनप्रचोदितासतीधात्रीसर्वभूतानांजनित्रीअभूत् तयाअंडजान्स्वेदजांश्चजनितवतीति परिणामेनयोज्यम् २२ ७ ७ ७

सम्यग्वेदनं संवेदः तस्यापि यदादिः सूतेरपि जननीधात्र्येवाभवत् तथा कर्मभोगिनां कर्मफलभोगिनां कर्म फलभोगशीलानां जंतूनां अणुतां सूक्ष्मत्वं तनुतां विस्तृततां त नुविस्तारे ऽस्मादौणादिकुनः अणुना साहचर्यात् विस्तृततां जनितवतीति पूर्ववत् कीदृशे कृतयुगे भावे आत्मनो भावनिर्वृत्ते आत्मनः प्रतिच यो भावः स्वभावः तेन निर्वृत्ते निष्पन्ने विदुषां स्वभावसिद्ध एव कृतयुगधर्म इत्यर्थः यथोक्तं विष्णुधर्मोत्तरे ज्ञानवैराग्यमैश्वर्यं धर्मश्च ... जेश्वर आत्मनो ब्रह्मभूतस्य नित्यमेव चतुष्टयमि ति तस्मात्सर्वेषामुत्कृष्टज्ञानकर्मणाम वश्यंभाविमुक्तिर्नत्ववरोहसंभावनापि २३ इतिश्रीमहाभारते हरि ... शे भविष्यपर्वणि टीकायां एकविंशतितमो ऽध्यायः २१ ५ ६ सन्निवृत्तेः प्रवृत्त्याख्याधर्मस्य फलमीरितम् प्रवृत्तिमात्रनिष्ठानां षोडशोऽस्थितिरीर्यते १ सा ऽहमिति पूर्वं प्रवृत्ते च निवृत्ते च नित्यं ब्रह्मपराय ण इत्युक्तलक्षणस्य धर्मस्य फलं श्रुतं इदानीं त्रेतायां केवलप्रवृत्त्यात्मके यज्ञादिरूपे धर्मे यत् साधु समीचीनं तदेवाहं श्रोतुमिच्छामि येन साधुना आचरितेन विधिना सां ख्ययोगादीनां परं तात्पर्यं प्रतिपाद्यं अव्ययं ब्रह्म पश्येयं विविदिषाद्युत्पत्तिद्वारेत्यर्थः १ अस्योत्तरं प्रकृतिसरूपार्थवादमुखेनैवाह दक्षस्त्विति दक्षः देहार्द्धयोगवि

संवेदजननीधात्री चेति मात्रा प्रचोदिता अणुतां तनुतां चैव जंतूनां कर्मभोगिनाम् २३ इतिश्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्वणि एकविंशतितमो ऽध्यायः २१ ७ ७ जनमेजय उवाच साध्वहं श्रोतुमिच्छामि त्रेतायां ब्राह्मणोत्तम यं ज्ञात्वा सर्वविद्यानां परं प श्येयमव्ययम् १ वैशंपायन उवाच दक्षस्तु पुनरालंब्य स्त्रीभावं पुरुषोत्तमः योगाद्योगेश्वरात्मानं विषण्णो गिरिमूर्द्धनि २ सुजानुः पीनजघना सुभ्रूः पद्मनिभानना रक्तांतनयना कांता सर्वभूतमनोरमा ३ दक्षः प्राचेतसस्तस्यां कन्यायां जनयत् प्रभुः देहार्द्धयोगविधि- ना कन्याः पद्मनिभाननाः ४ दक्षः पुरुषरूपेण स्त्रीरूपमपहाय वै दर्शने सर्वभूतानां कांतः कांततरो ऽभवत् ५ ताः कन्याः प्रददौ दक्षः स्वयं प्रा चेतसः प्रभुः ब्रह्मदेयेन विधिना ब्रह्मप्रासेन भारत ६ प्रददौ दश धर्माय कश्यपाय त्रयोदश सप्तविंशति सोमाय पत्नीहेतोः समाहितः ७ दक्षो दत्वाथ ताः कन्या ब्रह्मक्षेत्रं प्रपद्य च ब्रह्मणाध्युषितं पुण्यं समाहितमना मुनिः ८ तप्यमानो मृगैः सार्द्धं चचार वसुधां नृप तृणमूलफले र्दीप्तो दुश्चरं तपसा स कृत् ९

धिना स्त्रीभावं आलंब्येति तृतीयेनान्वयः स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्द्धयुगलमिवस्व इति श्रुतेः कीदृशं स्त्रीभावं योगेश्वरस्य दक्षस्यैवात्मा नं आत्मभूतं २ ३ कन्याः जनयत् अजनयत् अडभाव आर्षः ४ दक्ष इति स्त्रीरूपं अपहाय पुरुषरूपेण स्थित इति शेषः ५ ब्रह्मदेयेन ब्राह्मणानां दातुं योग्येन विधिना अ- लंकृत्य कन्यामुदकपूर्वं दद्यादेष ब्राह्मो विवाह इति स्मृत्युक्तेन ब्राह्मेण विधिनेत्यर्थः ६ ७ ब्रह्मक्षेत्रं प्रयागं अध्यासिकं ८ तप्यमान इति एतावता त्रेताधर्मस्य स्वरू पं दारसंग्रहमपत्योत्पादनम् अपत्यसंविभागो वनं प्रतिगमनं च केवलप्रवृत्तिधर्मैरेतस्य कर्तव्यमिति दक्षाख्यायिकामुखेन दर्शितमिति तात्पर्यं दर्शितम् ९ ७ ७

मृगास्तुनस्यतपसेत्यनुषज्यतेमोदंते अहिंसाप्रधानत्वात्तपसइतिभावः ब्राह्मणास्तुतपसःफलंअहिंसाप्रतिष्ठायांतत्सन्निधौ वैरत्यागइतियोगशास्त्रोक्तंदृष्ट्वा
मोदंतेदीक्षिताःइत्यादीनिब्राह्मणानांविशेषणानि १० संग्रामःयोगेनचित्तजयःतस्यकालेशरीरादीनांपतिः यथेष्टंप्रविलापनपरिग्रहसमर्थः अतएवसर्वज्ञत्वात्
कर्मणांसिद्धिंफलंप्राप्तिंस्वर्गनरकादिगत्यागतिरूपांपश्यति लक्ष्यतेसालक्षणातांपरिमेयामित्यर्थः ११ एवंदक्षाख्यायिकयापत्नीमपास्यवनंप्रतिगच्छेदित्यु
क्त्वासपत्नीकस्यापितदाहपुरा कल्पसरूपार्थवादमुखेन दानेति १२ स्तोत्रंवेदाध्ययनंयस्मैनूनमभिध्यतेवाचाविरूपनित्यया वृष्णेचोदस्वसुष्टुतिमितिमंत्रवर्णात्
तेनसंसिद्धाःशुद्धसत्वाःजनित्रंप्रथमंपदंब्रह्मतस्मिन्विषयेब्रह्मणाप्रणवेनइहअस्मिन्नेव जीवद्देहे अध्युषिता अधिवासनिष्ठांप्रापितास्तेनायंदेहोब्रह्मक्षेत्र-
मित्युच्यतेवेदेब्रह्मोपलब्धिस्थानत्वात् १३ यतिभिरुच्यतेइतिसंबंधः १४ एवंसपत्नीकानामपिवनस्थानांयोगजासिद्धिरस्तीत्युक्त्वायोग फलमाह याप्रजे

मृगास्तुनस्यमोदंतिफलंमोदंतिब्राह्मणाः दीक्षिताःपुण्यकर्माणस्तपसादग्धकिल्बिषाः १० संग्रामकालेकालज्ञःशरीरादिपतिर्मुनिः कर्मयज्ञ
कृतांतानसिद्धिंपश्यतिलक्षणाम् ११ दानमानप्रवीराश्चनिरुद्वेगानिरामिषाः मृगैःसहजरांयांतिसपत्नीकास्तपस्विनः १२ ब्राह्मणास्तोत्रसं
सिद्धाजनित्रेप्रथमेपदे ब्रह्मणाध्युषितत्वाच्चब्रह्मक्षेत्रमिहोच्यते १३ यतिभिःकर्मभिर्मुक्तैर्जितक्रोधैर्जितेंद्रियैः चरद्भिर्वसुधांविप्रैरकिं-
चनपर्येषिभिः १४ याप्रजापूर्वमारूढामानसीब्रह्मचारिणी सैवैषाव्यक्तिमापन्नास्वभावदुरतिक्रमा १५ अव्यक्ताव्यक्तमापन्नास्वभा
वादुरतिक्रमा व्यक्ताव्यक्तगतिश्चैषाकालधर्मान्महीपते १६ स्थावराजंगमाश्चैवस्थूलाःसूक्ष्माश्चभारत कालयोगेनकालज्ञाभवंतिनभवं
ति च १७ एताश्चैताःप्रजाःसर्वादक्षकन्यासुजज्ञिरे कश्यपेनाव्ययेनेहसंयुक्ताःकालधर्मणा १८ आदित्यावसवोरुद्राविश्वेचसमरुद्ग-
णाः नागाश्चानेकशिरसःसाध्यावैपन्नगास्तथा १९ गंधर्वाःकिन्नरायक्षाःसुपर्णाश्चतथापरे गरुत्मान्सहयक्षैश्चकिन्नराश्चसुवाससः
२० गावःपशुगणैःसार्द्धंनराश्चवसुधाधिप चराचरत्ववसुधाधर्तारश्चधराधराः २१

निसर्वेसर्वात्मकत्वात् हार्दाकाशाख्यंब्रह्मतदारूढामानसीमनोमा-
त्रकल्पिताब्रह्मचारिणीब्रह्मरूपेणैवगम्यमानासमाधिकालेदृष्टासैवएषालोकदृश्यावहिष्ठास्वभावेनसंस्कारेणप्रारब्धबलेनदुरतिक्रमाअतिक्रमितुमशक्यासमा
धौब्रह्मभावंगतस्यापिप्रारब्धकर्मवशात्पुनःसंसारभावनमवश्यंभावीत्यर्थः १५ अव्यक्तेति स्वभावादेवसमाधावव्यक्तंरूपमापन्नाप्रजाभवतिव्युत्थाने तत्रहे
तुःकालधर्मात्व्युत्थानसमाधिकालभेदलक्षणाद्धर्मात् प्रजाव्यक्ताव्यक्तरूपाभवति १६ एषागतिःप्राणिमात्रसाधारणेत्याह स्थावरेति यतःस्थावराणामपियोगज्ञत्वं
संभवतितस्मात्तदर्थंयतितव्यमितिभावः १७ एवंप्रसंगादपत्नीकसपत्नीकयोर्योगेधिकारमुक्त्वाप्रकृतांसृष्टिमनुसरति एताश्चेत्यादिभिःसार्द्धषड्भिःकश्यपेननिमित्तेन अव्य
येनस्वभावेनकालधर्मोयस्यतेन १८ १९ २० २१ ७

२२ २३ धातायथापूर्वमकल्पयदितिश्रुतेः पूर्वोक्तिमपिसर्वसर्वेषुकल्पेषुसमाननामरूपाधिकारमेवमतिपत्तव्यमित्याह तेषांरूपैरितिमुनयइतिसृज्यमानोप
लक्षणम् धर्मक्षेत्रेधर्मप्रसवभूमौभारतेवर्षे २४ क्षेत्रज्ञाःआत्मनिष्ठास्तुमानसेमनःकल्पितेबाह्येअभ्यंतरेवापूर्वोक्तिदिशाविर्भवंति यत्रेतिमानसेइत्यस्यवि
शेषणम् २५ गृहस्थादीनामप्युक्तविधयोगधर्मानुष्ठायिनांमुक्तिरस्तीत्याह त्रिभिःयेचेति २६ २७ शिलंकणिशादानंउंच्छंकणादानंदिविचराःहार्द्दाकि
शचराःचरितव्रताःयस्माद्भवंतितस्माद्व्रतचर्यैवमुख्यानाश्रमविशेषोमोक्षहेतुरितिभावः अतएवयाज्ञवल्क्योगृहस्थस्यापिमोक्षमाह न्यायागतधनस्तत्वज्ञान
निष्ठोतिथिप्रियः श्राद्धकृत्सत्यवादीचगृहस्थोपिविमुच्यतइति २८ इतिश्रीहरिवंशेभविष्यपर्वणिटीकायांद्वाविंशतितमोऽध्यायः २२ ७ छुवर्यव्रतच-
र्येसित्यूचेसप्तदशेव्रतम् प्राणयज्ञहविर्यज्ञसंज्ञंचित्तजयावहम् १ पूर्वाध्यायांतेसर्वेदिविचराभवंतिव्रतचारिणइत्युक्तंतत्रमनोजयाख्यंव्रतंएकादशेभीक्तमेवो

गजाःसिंहाश्चव्याघ्राश्चहयाःपक्षधरास्तथा खड्गाविषाणिनश्चैववृषभाश्चमृगास्तथा २२ चतुर्विषाणानागेंद्रापद्माभावर्णतःशुभाः सर्वल
क्षणसंपन्नाःप्राणिनःकामरूपिणः २३ तेषांरूपैस्तथागात्रैस्तैःशीलैस्तैःपराक्रमैः मुनयःपुनरुद्भूताधर्मक्षेत्रेसनातने २४ क्षेत्रज्ञामान
सेलोकेधर्मिणोवेदगोचराः यत्रोद्भूताःसुराःसर्वेदिविलोकेप्रतिष्ठिताः २५ येचान्येतपसासिद्धागृहस्थामनुजाधिप ब्रह्मचर्येणसंसिद्धाः
परिचर्यागतागुरोः २६ येचयोगगतिंप्राप्ताःसिद्धिहेतोर्महीपते क्लेशाधिकैःकर्मजन्यैर्वृत्तिंलप्स्यंतिवैद्विजाः २७ शिलोंच्छवृत्तयःख्या-
ताःसपत्नीकादृढव्रताः सर्वेस्तेतेदिविचराःभवंतिचरितव्रताः २८ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणिनामद्वाविंशति
तमोऽध्यायः २२ ७ वैशंपायनउवाच पितामहंपुरस्कृत्यमेरुपृष्ठेसमाहिताः जटाजिनधराविप्रास्त्यक्तक्रोधाजितेंद्रियाः १

त्तमाधिकारिणांमध्यमाधमानांतुचित्तजयायात्मविविदिषोत्पादनायचतृतीयाध्यायेसूचितंव्रतद्वयंप्राणरोधाख्यंहविर्यज्ञाख्यंचतदिहद्वयमभिधीयते तयोरा
द्यमपियज्ञरूपकेणैवविवक्षन् वैशंपायनउवाच पितामहंपुरस्कृत्येत्यादिश्लोकत्रयोक्तविशेषणाःव्रतहितेरताःदिविब्रह्मणिचराःसंचारिणोभवंतीति
पूर्वेणान्वयः अत्रयोगचिंतामणौसांख्ययोगेचक्रमध्येस्थितानाड्यस्तिस्रःस्तिस्रोत्रदेवताः इडाचवैष्णवीनाडीपिंगलाब्रह्मदेवताः ऐश्वरीसासुषुम्णास्या-
न्मेरुमध्येव्यवस्थिता नाडीमध्यमताग्रंथित्रययुक्तात्रिवेणिका उत्तरेवहतेगंगायमुनादक्षिणेस्मृता सरस्वतीपश्चिमायामासांसंगःसदांतरइत्युक्तेमेरुर्ना-
सिकातस्याःपृष्ठंभ्रूमाणमध्यंतस्मिन् समाहिताःसमाधिंगताःकिंकृत्वापितामहंकार्यस्य पिताकारणंतस्यपिताशब्दंब्रह्मतत् पुरस्कृत्यतत् प्राप्तिमाहृत्य १
पर्वतेति पर्वतांतरसंसिद्धेपर्वतानांपर्वव तामस्थ्नांनासावंशकपालास्थ्नोरंतरेसंसिद्धंनित्यसिद्धंतन्नाशेप्यविनाशिहार्द्दाकाशप्रकृत्यवबधेनास्य हन्यतेइति

श्रुतेर्देहनाशेपि आत्मोपलब्धिचक्राणामनाशावगमात् बहुपादपसंकुले बहुपादो नानायोगिगमनसाधनं धर्माधर्मवाहनहंकारः तं पातीति तदुपाधिः प्राणो
वायुस्तेन संकुले धातुसंरंजितशिले धातवो वातपित्तकफाः मनःशिलादिधातुसरूपा नाडीमार्गा वातैः संकुला शिला इव शिला अस्थिरूपा यस्मिन् समे समस्य ब्र
ह्मण उपलब्धिस्थाने तृणं बहिष्ठत्वाज्जरारोगादिदुःखं कंटकः अंतस्थत्वाच्छोकादिदुःखं देहद्वयधर्मरहितमित्यर्थः २ त्रयो ये ब्रह्म वेदयंतीति तेषां त्रयाणां ब्रह्मवे
दानां इडापिंगलासुषुम्णारूपाणां जीवोपाधिभूतप्राणमार्गाणां संबंधिनः पंच स्वरास्त्वर्यंते गम्यते ब्रह्म यैस्ते स्वराः प्राणस्य वृत्तिभेदाः प्राणापानसमानव्यानोदानाः
तैर्विराजिते पंचानामपि वायूनामेकीभावस्थाने इत्यर्थः मंत्रयज्ञपरा नित्यं मंत्राः प्राणादीनां तु रेफादिप्रभृतीनि बीजानि तेषां यज्ञो जपः तत्पराः नित्यं व्रते वायुजपे हिते
आनंदरूपे आत्मनि च रताः अत्र पंचानामपि प्राणादीनां स्थानवर्णबीजानि तानि नकुलीशयोगपरायणे प्रोक्तानि वर्त्तंत इति उक्तानि विशेषणानि मेरुपृष्ठे युज्यंते तानि
च प्राणो प्राणाग्रहृन्नाभिपादांगुष्ठांतसंस्थितः १ कृष्णोऽपानः कृकाटिस्थः पृष्ठपृष्ठांतपार्ष्णिगः सतारकवकारांतबीजेन विनियोजितः २ शक्रचापनिभो व्या-
नस्त्वगिंद्रियनिकेतनः तारकोपेतपांतस्थबीजतेजोविराजितः ३ मूर्धस्थो मध्यताल्वग्रकंठहृद्घनलाश्रयः उदानोऽरुणच्छायस्तारकाक्रांतयांतयुक् ४ श्वेतः

पर्वतांतरसंसिद्धे बहुपादपसंवृते धातुसंरंजितशिले समे निस्तृणकंटके २ त्रयाणां ब्रह्मवेदानां पंचस्वरविराजिते मंत्रयज्ञपरा नित्यं नि
त्यं व्रतहितेरताः ३ एक एवाग्निमाधाय सर्वे ब्राह्मणपुंगवाः विभिदुर्मंत्रविषयैः सुसमाहितमानसाः ४ त्रिधा प्रणीतो ज्वलनो मुनिभिर्वे
दपारगैः अतस्तेतत्समापन्ना यदेकस्त्रिविधः कृतः ५ एक एव महानग्निर्हविषा संप्रवर्तते सुधाकारेण मंत्रज्ञमंत्राणां कार्यसिद्धये ६

समानो हृन्नाभिसर्वसंधिनिकेतनः प्रणवाक्रांतलांतेन बीजेनात्यंतमुज्वल इति ५ तत्रायं निष्कृष्टोऽर्थः मेरुपृष्ठाख्ये भ्रूघ्राणमध्योपलक्षिते ब्रह्मणि सर्वकार
णे नित्यसिद्धे जीवोपाधिना नेकवर्णबीजवता नानावर्णनाडीत्रयसंचारिणा युते बाह्याभ्यंतरदुःखशून्ये क्रोधादिजयिनो निर्ममाः प्राणजयद्वारा चित्तवृत्तिमेकाग्रां
कुर्वंति निरोधाभ्यासेन निर्विशेषं ब्रह्म प्रतिपत्तुमिति ३ एकमेव प्राणाग्निं आधाय आलंब्य मंत्रविषयैः मंत्राः उदाहृताः रेफादिमुख्याः तेषां प्रतिपाद्या विषयाः
प्रीणनाद्याः प्रवृत्तिविशेषाः तैरुपाधिभिर्विभिदुः पंचधा प्राणापानादिप्रकारेण विभिन्नं चक्रुः यथोक्तं तत्रैव एकः स्थो वायुः प्राणनादिकर्मभेदाद्यथाक्रमम् प्राणो
पानसमानादिनामांतरमुपागत इति ४ त्रिधेति ज्वलनः प्राणाग्निः त्रिधा पूरकुंभकरेचकरूपेण प्रणीतो नाडीमार्गैः संचारितो अतः प्रणयनात्तेतत्वं प्राप्ताः पूर
काद्यभ्यासेनैव आत्मतत्वं अधिगम्यत इति भावः ५ एक एवेति एक एव प्राणाग्निः प्राणायामाभ्यासिनः हविषा आदेयानि च वक्ष्यामि क्षिप्रं योगस्य सिद्धये क्षीरं घृतं चाभि
ष्टान्नं मिताहारश्च प्रशस्यत इति दत्तात्रेयोदितेन सम्यङ्निषेवितेन महान् भूत्वा सम्यक् योगिनो विक्षेपमकुर्वन् प्रवर्त्तते आरोहावरोहमार्गयोर्यथेष्टं संचरति अयमर्थः ना

सिकांतो बहिरंतश्च द्वादशद्वादशांगुलमानेन प्राणः संचरन् तूलपिंडवत् घनीभूतः कुंभकाभ्यासेन तूलपिंडमिव शिथिलावयवसंयोगं कुर्यात् ततश्च बहिरंतश्च षट्त्रिंशत् षट्त्रिंशदंगुलमानेन परमा प्राणस्य गतिर्भवति स तदा सूक्ष्मोपि पुरोडाशवत्प्रथितो महानित्युच्यते एवंभूतस्य प्राणाग्नेः पार्ष्णिभागेन संपीड्य योनिमाकुंचयेद्दृढम् अपानमूर्ध्वमाकृष्य मूलबंधोयमुच्यत इत्यादिना हठोक्तप्रकारेण वायोरारोहः प्रसिद्धः भ्रुवोर्मध्ये प्राणमावेश्येति शास्त्रप्रसिद्ध एव अवरोहोपि योगियाज्ञवल्क्येनोक्तः संपूर्य कुंभवद्वायुमंगुष्ठात् मूर्ध्निमध्यतः धारयत्यनिलं बुध्या प्राणायामः प्रचोदितः व्योमरंध्रात्समाकृष्य ललाटे धारयेत्पुनः ललाटाद्वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् नेत्रात्प्राणं समाकृष्य नासामूले निरोधयेत् नासामूलात्तु जिह्वायामूले प्राणं निरोधयेत् कंठकूपात्तु हृन्मध्ये हृन्मध्यान्नाभिमध्यमे नाभिमध्यात्पुनर्मेढ्रे मेढ्राद्वन्ह्यालये ततः देहमध्याद्गुदे गार्गि गुदाद्वै ऊरुमूलके ऊरुमूलात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत् चितिमूले ततस्तस्माज्जंघयोर्मध्यतेनया जंघांततः समाकृष्य वायुं गुल्फे निरोधयेत् स्थानात्स्थाने समाकृष्य यस्त्वेवं धारयेद्द्विया सर्वपापविशुद्धात्मा जीवेदाचंद्रतारकम् एतत्तु योगसिद्ध्यर्थमगस्त्येनापि कीर्तितमिति स्वधेति स्वस्मिन् शरीरे धानं निधानं देहे वायोर्धारिणेति यावत् तस्याः कारणं करणेन हे मंत्रज्ञ राजन् मंत्राणां पूर्वोक्तानां रेफादिप्रभृतीनां प्रकाश्यत्वेन संबंधिकार्ये तत्तद्भूतजयः तत्सिद्धये ग्निः संप्रवर्त्तत इत्यर्थः तत्र धारणासिद्धयश्चोक्ता योगियाज्ञवल्क्येन यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि धारणेत्युच्य

स्वयंच दक्षसंज्ञोसौ भगवान् भूतसत्कृतः ब्रह्मा ब्राह्मणनिर्माता सर्वभूतपितामहः ७

ते सद्भिः शास्त्रतात्पर्यवेदिभिरित्यादिना व्योमांशे मारुतांशे च धारणां कुर्वतः शुभाम् त्रिदोषजनिता रोगा विनश्यंति न संशय इत्यंतेन ग्रंथेन दर्शिताः तत्र पादादिजान्वंतं जान्वादिपायवंतं पाय्वादिहृदयांतं ततो भ्रूमध्यांतं ततो मूर्द्धांतं च क्रमेण भूम्यंबुतेजोवाय्वाकाशस्थानानि ब्रह्मविष्णुरुद्रेश्वरसदाशिवाधिष्ठितानि लवरयहबीजयुतानि तेषु तेषु पंचपंचघटिकापर्यंतं मनो धारयंस्तत्तद्भूतजयो भवति तथा परमात्मन्येव प्रणवेन नादांते धारणा मुख्या तथा तेजोबन्हेषु धारणां कुर्वतः क्रमात् वातपित्तश्लेष्मजा रोगा नश्यंतीति ज्ञेयं विस्तरभयात्तु न प्रपंचितम् ६ एवं त्रिधा प्रणीत इत्यादिना पूरककुंभकरेचकाभ्यासेन विपुलीकृतो हविष्याशनाभ्यासमहिम्ना वशीकृतो यत्र कुत्रचिद्धारितः प्राणाग्निस्तत्तद्धारणाफलं प्रसूत इत्युक्तं तत्र प्रणवेन परात्मन्येव धारितस्य प्राणस्य फलमुच्यते स्वयमिति दक्षते सर्वस्मिन्कार्ये संनह्यतीति दक्षः सूत्रात्मा तद्रूपेण संप्राप्तो भवति भगवान्सर्वैश्वर्यसंपन्नः भूतं नित्यसिद्धं च तत् सत् च कारणं तेन सत्कृतः निर्मितः आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ध्याननिर्मथनाभ्यासात्पाशं दहति पंडित इति श्रुतेः प्रणवेनात्मनि चेतो युंजतः प्रथमं उकारार्थभूतसूत्रात्मसाक्षात्कारो भवतीत्यर्थः स एवंभूतो दक्षो मुख्यो ब्राह्मण इति ब्रह्मा ब्राह्मस्य चतुर्मुखस्य निर्माता अत एव सर्वेषां भूतानामस्मदादीनां पितामहः ७ ७ ७ ७ ७

कोयंदक्षइत्याशंक्ययःपूरकादिनाराधितःप्राणाग्निःसएवाहमित्याह दंडीतियोयंपूर्वपूरककालेनासिकानलिकयापूर्यमाणत्वाद्दंडाकारमिवप्रासइति दंडीजातः स
एवकुंभकावस्थायांचर्मीततइतिचर्मवर्मरूपेणसंवृत्तःसएवपुनःरेचकावस्थायांदंडरूपात्सूक्ष्मरूपेणशरकांडाकारत्वंपूर्ववत्प्राप्तःसएवसएषखड्गवत्तीक्ष्णधारः
एवकुंभकावस्थायांचर्मीतत... 
संसारवृक्षच्छेदनसमर्थःशिखीप्राणाग्निःपद्मनिभाननइत्यनेनदक्षरूपेणप्रसन्नइतिलक्ष्यते अभवत्प्रसन्नभावेनन्यस्तसंतापोजितक्रोधोजितेंद्रियश्चस्व
भावतोभवत् तत्रस्वाभाविकंवैराग्याद्याविर्भूतंनहठात्कृष्टमित्यर्थः यथोक्तंवृद्धैःउत्पन्नात्मप्रबोधस्यत्वद्वेष्टत्वादयोगुणाः भवंत्ययत्नतःसिद्धानतुसाधक
रूपिणइति ८ यजतेइति ब्रह्मादक्षःपुष्करेआत्मतीर्थेमेधयाशास्त्राचार्योपदेशप्राप्तयाधीवृत्यासहसंगतोयजतेतन्निष्ठोभवति यस्यामवस्थायांइंद्र-
आत्मदर्शिनेनप्रोक्तानिसामानिअहमन्नहमन्नइत्यादीनितैत्तिरीयप्रसिद्धानि इदमदर्शमिति ३ तस्मादिंद्रोनामेदंद्रोहवैनामतमिदंसंतमिंद्रइत्याचक्षते
परोक्षेणपरोक्षप्रियाइवहिदेवाइत्यैतरेयकेचइंद्रशब्दस्यआत्मदर्शिनिप्रवृत्तिनिमित्तंदर्शितम् ९ सुसमाहितोयोगीपूर्वसंस्कारात्समाधेरप्रच्युतयेतत्रयज्ञमेवक-
ल्पितवानित्याह घृतमिति मखबाह्ययज्ञेन्यस्तदेवतोद्देशेनत्यक्तम् परमकंअभौतिकत्वात्श्रेष्ठं कल्पितंमनसैवनकर्मतःब्रह्मणःसूत्रात्मनःपदेस्थानेसमाध्यवस्था-

दंडीचर्मीशरीखड्गीशिखीपद्मनिभाननः अभवन्न्यस्तसंतापोजितक्रोधोजितेंद्रियः ८ यजतेपुष्करेब्रह्मामेधयासहसंगतः इंद्रप्रोक्तानिसा-
मानिगीयतेब्रह्मवादिभिः ९ घृतंक्षीरंयवाव्रीहिःसर्वपरमकंहविः वेदप्रोक्तंमखेन्यस्तंकल्पितंब्रह्मणःपदे १० निर्मथ्यारणिमाग्नेयांशमीग
र्भसमुत्थिताम् सब्रह्माप्रथमंतस्मिन्नग्निमन्युंप्रवर्त्तयत् ११ नह्यल्पंविहितंद्रव्यंयथाग्निर्यज्ञकर्मणि प्रवर्त्तयेद्धिमार्गेर्वाहुतद्रव्यमयंबलं १२

यामित्यर्थः १० निर्मथ्येति अग्नेःपरमेश्वरस्यतिरोधानस्थानभूतारणिरिवारणिरविद्यातांनिर्मथ्यविनाश्यशमीगर्भसमुत्थितम् शंसुखंईयतेगम्यतेनेनेतिशमी
देहःशमीवृक्षतुल्योवातस्यगर्भेसम्यगुत्थितम् आविर्भूतं प्रथमंकारणंब्रह्मरूपमन्यमकल्पितमग्निंअंतर्यामिणंप्रवर्त्तयत् अडभावश्छांदसः शरीरेनित्याबि
भूतमपिदेहाद्यभिमानवशात्तिरोहितंऐश्वर्यसंतंदेहाभिमानत्यागात्स्वेनेश्वरेणरूपेणाविर्बभूवेत्यर्थः ब्रह्माब्रह्मवित्तस्मिन्सूत्रात्मनि ११ ननुयथासोमया
गेआतिथ्यामग्निमंथनंक्रियतेयथावाचातुर्मास्येषुतद्वदिहापिघृतावत्काल्पनिकएवायंनिर्मथ्योग्निरस्तुकिंसूत्रादन्यस्यकारणाग्नेःकल्पनेनेत्याशंक्याह नह्य
ल्पमिति यथायज्ञकर्मणिबाह्येअग्निर्निर्मथ्य होम्यत्वेनविहितः अमृताहुतिरग्न्याहुतिःसैषास्वर्ग्याहुतिर्यदग्न्याहुतिरितिश्रुतिपूर्वकंमानसेयज्ञेतथात्रअग्न्या
ख्यंअल्पंबाह्यंद्रव्यंविहितंनहियोगिनाइत्थंयज्ञाश्चिंतनीयइतिविधिरस्ति किंतुयज्ञियसंस्कारदार्ढ्याद्योगेपिताद्दशाःसंकल्पाभवंति अतएवश्रुतिः सयदिपि-
तृलोककामोभवति संकल्पादेवास्यपितरःसमुत्तिष्ठंतीतिचिरपरिचितानांपित्रादीनामेवयोगेनसंप्रज्ञातावस्थायामुत्थानमाह परिपक्वयोगिविषयंतुअह-

श्रुतवस्तुदर्शनं समाधावनि प्रकृतकर्मणोत्रानधिकारादन्योग्निरत्र प्रकृतसूत्रादंतर ईश्वर एव ग्राह्य यत् अल्पं द्रव्यं उत आज्यपयः प्रभृति अग्नौ त्यागपूर्वकं-
प्रक्षिप्तं तद्विकारभूतं स्वर्गे दिव्यदेहादि तस्य बलं अत्र विभागैर्यथोच्चनीचस्थानं प्रवर्त्तयेन्नासिहतथेत्यर्थः अल्पद्रव्यसाध्येषु हियज्ञेषु वित्तव्ययस्वरूपश्र-
द्धातारतम्येन फलतारतम्यमस्ति आत्मयज्ञे तु नायं विभागः सर्वेषां कैवल्यरूपस्य फलस्यैकरूपत्वादिति भावः १२ तर्हि किमर्थं संप्रज्ञातो हविरादिकल्पन
मुक्तमत आह फलानिति विततेऽध्वरे योगे यज्ञे हवींषि यानि विहितानि तैर्हविर्भिः फलानि च प्रयुक्तानि भवंति तं यथा यथोपासते तथा तथा प्रेत्य भवतीति श्रुतेः
यादृग्गुणविशिष्टमात्मानं चिंतयंति तादृक् फलभागी ब्रह्मलोके भवति ये तु ब्रह्मवादिनं अत्रैव ब्रह्मसाक्षात्कारवंतस्तेषां तानि फलानि अणिमाद्यैश्वर्याणि अ
त्रैव निग्रहानुग्रह प्रयोगज्ञाः प्रयुंजते प्रकाशयंति तथा च काम्यमेव हविरादिकल्पनं न तात्त्विकमिति भावः १३ योगफलमेव प्रभोग्यं तदाह षण्मासानिति बृ-
हस्पतिः देवाचार्यः परया ब्रह्म संपदा एषास्य परमा संपदिति श्रुतिः निर्विशेषावस्थया ब्रह्मसंबंधिनि यज्ञे योगे वितते सति षण्मासान् अत्यंत संयोगे द्विती-
यामासषट्कं आदरनैरंतर्य दीर्घकालैः सम्यगभ्यस्तेस तिचतुरो वेदान् बभाषे चतुर्भिर्वेदैः सह संवादं कृतवान् वेदान् लब्धवानित्यर्थः षण्मासादेव योगसि

फलानि तैः प्रयुक्तानि हवींषि वितते ध्वरे प्रयुंजते प्रयोगज्ञा सुनयो ब्रह्मवादिनः १३ षण्मासांश्चतुरो वेदान् संबभाषे बृहस्पतिः ब्रह्मणो
वितते यज्ञे परया ब्रह्मसंपदा १४ शिक्षाक्षरसमेताया मधुराया समंततः सानुस्वरितरामाया सरस्वत्याः प्रभाषते १५ तेन ब्राह्मणशब्दे
न ब्रह्मप्रोक्तेन भारत विभाति समरवोव्यक्तं ब्रह्मलोक इवापरः १६ मरवो ब्रह्ममुखोत्तीर्णैर्ब्रह्मशब्दैरनामयैः प्रयोगैः संप्रयुक्तस्य जल्प
न्निव स वर्द्धते १७ समिद्भिः सोमकलशैः पात्रैश्चैव बहिःस्खलैः यवैर्व्रीहिभिराज्यैश्च पूर्णैश्च जलभाजनैः १८

द्धिर्भवतीति भावः तथा च मैत्रायणीयश्रुतिः षड्भिर्मासैस्तु युक्तस्य नित्ययु
क्तस्य देहिनः आनंदः परमो गुह्यः सम्यग्योगः प्रवर्त्तत इति १४ स लब्धवेदो बृहस्पतिर्वेदसंप्रदायं शिष्येषु प्रवर्त्तितवानित्याह शिक्षेति सः सरस्वत्याः क-
र्मणि षष्ठी सरस्वतीं प्रभाषते सर्वेभ्यो वेदमध्यापयतीत्यर्थः सानु शिखर उपनिषदिति यावत् स्वरितं स्वर्गतिः तत्साधनं कर्म ताभ्यां रामाभिरामा तस्याः ब्रह्मकर्मकांडाभ्या
रमणीयेत्यर्थः १५ तेन वेदोपदेशेन ब्राह्मणानिः कर्मचोदनावाक्यानि तैः शिक्षंते इति ब्राह्मणः शब्दः तेन प्रवृत्तिप्रधानेनेत्यर्थः ब्रह्मप्रोक्तेन वेदोदितेन मार्गे-
ण विरच्यमानः समरवः याज्ञिकप्रसिद्धो यज्ञः ब्रह्मलोक इव आध्यात्मिकयोगयज्ञ इव विभाति १६ मरवमेव स्तौति पदं विष्णुरजो ब्रह्मेत्यतः प्राक्तनेन संदर्भेण मरव इति
ब्रह्मशब्दैः वेदशब्दैः अनामयैः अप्रमाण्यशंकाशून्यैः प्रयोगैः यथाश्रुतं विनियुक्तैः मंत्रैः संप्रयुक्तस्य सादरस्य यजमानस्य मरवो जल्पन्निव विवर्द्धते १७ सोम
कलशैः सोमधारणार्थैर्ग्रहचमसैः पात्रैः स्रुक्स्रुवादिभिः जलभाजनैः वसतीवर्यैकधनैर्भाजिनैः १८ ५ ५ ५ ५ ५ ५

कर्मेति कर्मयज्ञार्थवर्द्धत इत्यनुषज्यते प्राप्तैर्वसुभिः कनकादिभिः कर्मभिरिष्ट्यादिभिः परान्वितैः परस्मिन्ब्रह्मणि समर्पितैः वत्सैश्च परिप्राप्तैरिति संबंधः छंदसि पऽरेपि व्यवहिताश्चेति धातूपसर्गयोः आर्षः संबंधः कोमलैः बालैः १९ ब्रह्मणा वेदघोषेण वृद्धः वयसा दक्षिणया वृद्धः यज्ञ आयुष्मान् सदक्षिणाभिरायुष्मानि तिश्रुतेः पुष्कलदक्षिणावानित्यर्थः तपसा ज्ञानेन वृद्धः ब्रह्म ज्ञानमयस्तत्प्रधानस्तदर्थ इत्यर्थः विद्यया कर्मांगावबद्धउद्गीथाद्युपासनया २० मानसैरिति मनःकल्पितैः समिदादिभिः क्रियामूर्तिर्यज्ञात्मा ब्रह्मा येच पदार्था अन्ये तस्माद्ब्रह्मणः स्वयंभूता विनापि कल्पनां स्वभावादेवात्मन्यध्यस्तान् घृतादीन् जुहोति २१ तेजोमूर्तिधरैः चिन्मयैः रूपैः ईड्यदेवतादिभिर्यागरूपे रूपे तं तद्ब्रह्मणो यजनं सर्वप्राणभृतां कर्मणा न अस्पृशत् नस्पर्शं प्रापसबाधिकः यज्ञ इत्यर्थः २२ शम्याः

कर्मप्राप्तैश्च पशुभिः कर्मभिश्चापरान्वितैः गोभिः पयस्विनीभिश्च परिवत्सैश्च कोमलैः १९ ब्रह्मवृद्धो वयोवृद्धस्तपोवृद्धश्च भारत ब्रह्मज्ञानमयो देवो विद्यया सह संगतः २० मानसैश्च क्रियामूर्तिर्येच भूताः स्वयं नृप ब्रह्मा जुहोति तोस्तस्मान्मरुद्भिः सहितस्तदा २१ तेजोमूर्तिधरैरूपैर्नचतत्कर्मणास्पृशत् वेदप्रोक्तेन विधिना सर्वप्राणभृतां नृप २२ निर्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थिताम् क्रतुना यजते पूर्वमग्निष्टोमेन स प्रभुः २३ सदस्यस्तत्सदोव्यक्तं शुशुभे यज्ञकर्मणि जल्पंति मधुरा वाचः सानुसाराः क्रियास्तथा २४ कर्मभिश्च तपोयुक्तैः वेदवेदांगपारगैः सूर्येंदुसदृशै राजन् विरराज महाक्रतुः २५ ब्रह्मघोषेण महता ब्रह्मावास इवापरः वसुधामिव संप्राप्तैः सर्वै रैवदिवौकसैः २६ वेदवेदांगविद्भिश्च विनीतैर्ब्रह्मवादिभिः गतागतैस्तपःश्रांतैः स्वर्गलोके महीयते २७ ज्वलद्भिरिव विप्रेंस्तैस्त्रिभिरेवाध्वरेग्निभिः ब्रह्मलोक इवाभाति ब्रह्मणः स महाक्रतुः २८ इंद्रप्रोक्तानि सामानि गायंति ब्रह्मवादिनः वचनानि प्रयुक्तानि यजूंषि वितते ध्वरे २९ तपःशांता ब्रह्मपराः सत्यव्रतसमाहिताः आययुर्मुनयः सर्वे मनोभिः श्रोत्रवादिभिः ३० होता चैव भवद्राजन् ब्रह्मत्वेच बृहस्पतिः सर्वधर्मविदां श्रेष्ठः पुराणो ब्रह्मसंभवः ३१ यजमानश्च यज्ञांते विष्णोः पूजां प्रयुज्य च आदित्याः पश्चिमे गर्भे तपसा संवृते नृप ३२

गर्भे उत्पन्नो योऽश्वत्थस्तस्मादुद्भवो यस्यास्ताम् २३ अनुसराः सहायाश्च मसाध्वर्यादयः तत्साहिताः २४ २५ दिवौकसैः छांदसं अकारांतत्वम् २६ गतैरागतैश्च महीयते क्रतुरित्य पकृष्यते मनुष्यलोकेतु सुतरां महीयत इति भावः २७ त्रिभिरेव २८ सामानि स्तोत्राणि वचनानि शास्त्राणि २९ श्रोत्रवादिभिः श्रुतमात्रानुसारिभिर्मनोभिः संकल्पैः ३० होता ब्रह्मा च बृहस्पतिरेवमूर्तिभेदं प्रकल्पाभूदित्यर्थः ३१ विष्णोः पूजां विष्णुवर्पणं प्रयुज्य कृत्वा क्रतुमहिम्ना यजमानो दित्या गर्भे जात इति शेषः क्रतुभिर्देवत्वं प्राप्यामित्यर्थः ३२ ५ ५ ५ ५ ५ ५ ५

एवंकर्मफलंदेवताभावंस्फुरबहुलमुक्तासुखदुःखस्पर्शशून्यंतेहवैशरीरस्यसतःप्रियाप्रिययोरपहतिरस्त्यशरीरंवावसंतंनप्रियाप्रियेस्पृशतइतिश्रुतिप्रसिद्धंशरी रतालक्षणंमोक्षंविष्णुपदमाह पदमिति पदंविष्णुरितिसामानाधिकरण्येनतद्विष्णोःपरमंपदमितिषष्ठीराहोःशिरइतिवदौपचारिकभेदपरेतिदर्शितं अजो नजायतेब्रह्मादिवदित्यजोकर्मप्राप्यःब्रह्माब्रह्मवित्विष्ववारव्यांनिर्द्वंद्वंकर्माप्राप्यंपदमेतीत्यर्थःनिष्परिग्रहंनिर्गतज्ञानतत्कार्यं पदमेवस्तोतियत् इतिद्वंद्वादि पदसहस्राणीत्यर्थः ३३ अवध्यंसर्वकर्मफलगर्भितंअबध्यमितिपाठेत्वविनाशिइतरत्रतुविनाशीत्यर्थः अजइत्यस्यव्याख्यानंव्यतिरिक्तमिति आत्मापि आत्मैवयस्यमुनयोभवंतीतिपदंविष्णोरभेदोव्याख्यातः ३४ परिग्रहाःपरितोगृह्णंतिबध्नंतीतिपरिग्रहाःविषयारूपादयःदोषप्राप्तारागादिदोषेणैवकल्पिताःतथाचास्य पादाचार्यप्रणीतंन्यायोपबृंहितंसूत्रंदोषनिमित्तंरूपादयोविषयाःसंकल्पकृताइतिबलात्पूर्वसंस्कारबलात्मनश्छादयंति अतोत्यंतावहितेनदोषानिग्राह्याइति

पदंविष्णुरजोब्रह्मानिर्द्वंद्वंनिष्परिग्रहम् यतःपदसहस्राणिभविष्यंत्युद्भवंतिच ३३ अवध्यंचाप्रमेयंचव्यतिरिक्तंचकर्मभिः आत्मापि- यस्यमुनयोभवंतिनिष्परिग्रहः ३४ परिगृहाश्चविषयादोषप्राप्तामहीपते दोषाश्चयुगपत्सर्वेछादयंतिमनोबलात् ३५ इंद्रियग्राम विषयेचरंतोनिष्परिग्रहाः परिग्रहंशुभंधर्ममविद्यालक्षणंविदुः ३६ विद्यालक्षणसंयोगान्नमनश्छाद्यतेनृप यदिचेन्मुनिशब्देनगृह्य तेब्रह्मवादिभिः ३७ वेदविद्याव्रतस्नातैर्नियतैःकुरुसत्तम दिविलोकाःसतांस्थानंलोकानांलोकउच्यते ३८ यत्रदेवाह्वयपुष्टानक्षय- यांतिभारत यजमानश्चभोगैःस्वैःकर्मप्राप्तोदितेपदे मोदतेसहपत्नीभिर्विज्वरोवसुधाधिप ३९ यज्ञावसानेशैलेंद्रद्विजेभ्यःप्रददौप्रभुः दययासर्वभूतानांनिर्मलेनांतरात्मना ४०

भावः ३५ ननुरूपादिदर्शनंदेहवतामपरिहार्यंतत्कथंनिष्परिग्रह त्वंवेत्स्यतीत्याशंक्यअहंममेत्यविद्यैवपरिग्रहो नदर्शनमात्रमित्याह इंद्रियेति चरंतोपिनिष्परिग्रहाएवभवंतिमुनयइतिशेषः ऐंद्रजालिक्यांसंपदितत्त्वविदिवनसज्जतइतिभावःशुभंवेदबोधितंधर्ममपि अविद्यालक्षणंपरिग्रहंबंधकमेवविदुरतोनिर्द्वंद्वमेवविष्णुपदंश्रेयइतिभावः ३६ विद्येति रागादिभिरितिशेषः कदानच्छाद्यतइत्यतआह यदिति ब्रह्म वादिभिर्यदियदामुनिशब्देनमुनित्वप्रतिपादकशब्देनतत्त्वमसिवाक्योपदेशेनवागृह्यतेऽनुगृह्यतेतदातदर्थमननात्ज्ञाततत्त्वोनरागादिभिःछाद्यतइत्यर्थः ३७ प्रासंगिकंविद्याफलादिकंसमाप्यप्रकृतंकर्मफलमनुसरति वेदेतिसतांश्रेष्ठानांजनानांस्थानंयत्दिवितदेवकर्मठद्यन्देलोकइत्युच्यतइत्यर्थः ३८ स्थानमे वविशिनष्टियत्रेत्यर्द्धेनकर्मप्राप्तोदितेकर्मभिःप्राप्तेअधिकारिभिश्चभुंक्तेवेतत्पदमित्युदिते ३९ यज्ञेति शैलेंदिव्यंदेहंपित्र्यंवागांधर्ववादैवंवाप्राजापत्यंवाब्रा ह्मंचेतिश्रुतिप्रसिद्धंकर्मफलभूतंद्विजंद्विजेभ्यःत्रैवर्णिकेभ्योयजमानेभ्यःप्रभुर्यज्ञफलदातामहाविष्णुःदेवानांभूतपालकत्वाद्दयेति ४० ७ ७

तंशैलमितिशैलंसर्वगात्राण्यीतिसामानाधिकरण्यंवेदाःप्रमाणमितिवत्सर्वगात्रात्मकक्षेत्ररूपंशैलंपरस्परविशेषिणोभेदद्दष्यामियोब्राह्मणत्वक्षत्रियत्वादिजा
त्यभिमानेनविशेषवंतःभेत्तुंआत्मनोव्यतिरेकेणनिच्छेत्तुंनशेकुःसर्वोद्यमैःकृत्स्नैरपिकर्मभिःकिमर्थंभेदनंप्रविभागार्थंप्रकर्षेणविद्यादिभ्यआत्यंतिकव्यतिरेक
स्तदर्थंमोक्षार्थमित्यर्थः ऋतुकोटशापिमोक्षोनलभ्यतइत्याशयः ४१ ततइति देवताभावेप्युच्चनीचभावदर्शनक्षोभेणश्रांतास्तेनिषेदुःवसुधातलेपुनःसंसा
रंप्रापुरित्यर्थःविवर्णवदनाःस्वर्गेभ्रृशंदुःखेन ४२ सुपार्श्वइति शोभनंपार्श्वेपिलक्षितंसामीप्यंयस्यससुपार्श्वःसद्गुरुःगिरिमुख्यःगिरतिहवेदिषंतंशप्रा
नमितिश्रौतनिर्वचनात् पापच्छेतॄणांमुख्यःसमूलाविद्योच्छेदकत्वात् प्रणतःशांतःतान्प्रतिशिरसावेदांतवाक्येनओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरोमि-
ति अनेनवाग्वादीनांब्रह्मभावप्रतिपादकेनअब्रवीत् ४३ नहीति अयंदेहाभिमानशैलःबलात्हठेनयुक्त्याविनाभेत्तुंनहिशक्यःतत्रहेतुःअसुसंगिभिःअ
सुषुइंद्रियेषुसंगशीलैःदेहेंद्रियादिषात्मधीमद्भिः ४४ भेदनेउपायमाह एकीभूताःसमाहिताःसमाधिमंतोयदिसमाधौएकात्म्यंप्राप्ताअत्रह्येतेसर्वंएकंभव

तंशैलंसर्वगात्राणिपरस्परविशेषिणः नशेकुःप्रविभागार्थंभेत्तुंसर्वोद्यमैरपि ४१ ततस्तेब्राह्मणगणानिषेदुर्वसुधातले श्रमेणाभिह
ताःसर्वेविवर्णवदनानृप ४२ सुपार्श्वोगिरिमुख्यस्तुवाग्भिर्मधुरभाषिताः अब्रवीत्प्रणतःसर्वान्शिरसातान्द्विजोत्तमान् ४३ नहिश
क्योबलाद्भेत्तुंयुष्माभिरसुसंगिभिः अपिवर्षशतैर्दिव्यैःपरस्परविरोधिभिः ४४ एकीभूतायदासर्वेभविष्यथसमाहिताः अविरोधेनयु
गपत्विभाजिष्यथनिर्वृताः ४५ बलंहिरागदोषाभ्यांवर्द्धतेब्रह्मसत्तमाः विमुक्तंरागदोषाभ्यांब्रह्मबर्द्धतिशाश्वतम् ४६ यदाहंभेद-
यिष्यामिस्वर्गभिन्नैःशिलाशितैः धातुभिश्चविसर्पद्भिःशिखरैश्चानुपातिभिः ४७

तीतिश्रुतिप्रसिद्धंहितत् अविरोधेनसर्वभूताभयदानेननिर्वृताःशांताःयदिभविष्यथतर्ह्येवैनंविभाजिष्यथसमाधिरेवदेहाहंधीभेदकइत्यर्थः ४५ बलमिति
बलंस्वभावःजयसामर्थ्यंरागःतत्सहचरोद्वेषःताभ्यांवर्द्धतेच्छिद्यतेचौरादिकस्यवृद्धेर्ह्यकिंचिद्रूपंब्रह्मब्रह्मनिष्ठावर्द्धतिवर्द्धतेआर्षस्तङ्भावः ४६ यदाह-
मिति अहंगुहाशयैश्चोद्यमानःएनंशैलंभेजयिष्यामियुष्मान्भेदनेनियोक्ष्यामितदेवभेत्स्यथेतिअध्याहृत्यश्लोकद्वयंयोज्यंअहंगुरुःगुहायांबुद्धौशेरतेतेसं-
स्काराःतैःस्वर्गभिन्नैःस्वर्गात्पृथक्भूतैः ऐहिकामुष्मिकभोगविरक्तैः एतएवशिलाशितैःस्फटिकशिलावदत्यच्छैःधातवोदेहारंभकाणितेजोबन्नानितेत्सत्का
र्याणिवाक्प्राणमनांसिअन्नमयंहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितिश्रुतेःतेषांवागादीनांविसर्पणेनप्रवृत्तिलिंगेनेत्यर्थःशिखरैरिवोच्छ्रितैरिंद्रियैर
नुपातिभिःखलेकपोतन्यायेनतत्वेनपतनशीलैः ४७ ध ध ध ध ध ध ध ध ध ध

पार्श्वशब्देनसमीपस्थास्त्र्यादयस्तान्येवविवराणिचित्ताहिप्रवेशाबिलानितैर्विशीर्णैः तथानागैः श्वेतसर्पतुल्यैः शास्त्रादिव्यसनैः व्यालैः कृष्णसर्पतुल्यैः कामादि व्यसनैश्चविशीर्णैश्चोद्यमानः प्रेर्यमाणः एतैर्गुणैः प्रीतोगुरुर्यदादेहाद्यध्यासमपनिनीषत्तदैवतन्नाशोनान्यथेत्यर्थः ४८ तूष्णींबभूवुः वैराग्याद्यभावादात्मनः देहात्पृथक्करणव्यापारान्निवृत्ताइत्यर्थः ४९ इतिश्रीमहाभारते हरिवंशेभविष्यपर्वणिटीकायांत्रयोविंशतितमोऽध्यायः २३ ॥ अष्टादशेव-पुर्भेत्तुमशक्तैःकर्मभूतले कर्तव्यंब्रह्मसदनेचित्तशुद्ध्यर्थमीर्यते १ बलिरिति तेषांशैलभेदासमर्थानांब्रह्मविदांकर्मविदांब्रह्मवादिभिस्तादृशैः ऋत्विग्भिः सार्द्धंपृथिव्यांबल्यादिकंवर्द्धतेतथादेवताविष्णुःअर्चा अर्च्यागुर्वादयः तेचपूज्यंतेतदाप्रभृतिशैलेंद्रवचनप्रतिग्रहप्रभृतीतिद्वयोःसंबंधः १ २ तत्रैव-पृथिव्यामेवब्रह्मसदनेअविमुक्तंवैकुरुक्षेत्रंदेवानांदेवयजनंसर्वेषांभूतानांब्रह्मसदनमितिश्रुतिप्रसिद्धेवाराणस्याख्येअविमुक्तेतत्रैवेतिविशेषः आध्या-

विशीर्णैःपार्श्वविवरैर्नागैश्चगलितैर्भुवि बहुभिर्व्यालिरूपैश्चचोद्यमानोगुहाशयैः ४८ प्रतिगृह्यचतद्वाक्यंशैलेंद्रस्यसुभाषितम् तूष्णींबभूवुस्तेसर्वेतदाब्राह्मणसत्तमाः ४९ इतिश्रीमहाभारतेखिलेषुहरिवंशेभविष्यपर्वणित्रयोविंशतितमोऽध्यायः २३ वैशंपायनउवाच बलिर्हैमिश्चवर्द्धंतेअहन्यहनिभारत द्विजानांतपसाढ्यानांगृहधर्मेषुतिष्ठताम् १ देवताश्चाश्चपूज्यंतेतदाप्रभृतिभारत तेषांब्रह्मविदांराजन्पृथिव्यांब्रह्मवादिभिः २ तत्रैवब्रह्मसदनेसमेनिस्तृणकंटके प्राज्येंधनतृणेदेशेपुण्येपर्वतरोधसि ३ वासंयत्रप्रकुर्वंतिदृष्ट्वाभगवतःक्रियाम् तपोर्थिनोमहाभागाब्रह्मचर्यव्रतेस्थिताः ४ गृहस्थधर्मनिरताजितक्रोधाःसमाहिताः यतयश्चापिकांक्षंतिधर्मेणेहविकांक्षिणः ५ वन्यैःकर्मफलैश्चैवरताब्राह्मणपुंगवाः अग्निहोत्रव्रतस्नाताजितक्रोधाःसमाहिताः ६ दैवयुक्तेनवायुक्ताःकर्मणाब्रह्मसत्तमाः चीरवल्कलसंवीतानियतानियतेंद्रियाः ७ चरंतोब्रह्मचर्यंचव्रतमास्थायदारुणम् अनेनविधिनाराजन्क्रमप्राप्तेनसर्वशः ८ क्रमाद्येवेदसंस्कारंपुण्यंप्राप्ताःसनातनम् पूर्वैराचरितंराजन्मुनिभिर्ब्रह्मवादिभिः ९

त्मिकभ्रूघ्राणसंध्याख्यब्रह्मसदननिवृत्त्यर्थंतदुपास्त्यनधिकारिणामेवप्रस्तुतत्वात् क्षेत्रमेवात्रब्रह्मसदनशब्दार्थः पर्वतस्यविंध्यस्यरोधःसमीपे ३ भगवतःक्रियांप्राणिनांगत्यागतिरूपं तपोर्थिनःतपआलोचनेअत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवतीतिश्रुतिप्रसिद्धमोक्षहेतुतत्वज्ञानार्थिनइत्यर्थः ४ यतइति सन्यासिनांग्रहणं चोप्यर्थेयितयोपिइहकांक्षंतिवासमित्यनुषज्यते तेषामपिअविमुक्तेप्रतिष्ठानांविहारोनैवविद्यतइतिकाशीतोऽन्यत्रगमननिषेधात् विकांक्षिणोविशेषेणकांक्षाइच्छातद्वंतः इहवस्तुमित्यर्थः ५ वानप्रस्थाअपिएतदेवकांक्षंतीत्याह वन्यैरितिद्वाभ्यांएतेपीहवासंकांक्षंतीत्यनुषज्यते ६ दैवयुक्तेनअयाचितोपस्थितेनकर्मणायाञ्चादिनायुक्ताः वृत्त्यर्थमितिशेषः ७ ब्रह्मचर्यंब्रह्मनिष्ठांअनेनआश्रमक्रमेण ८ आचरितंसंस्कारम् ९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नेति अवेदविद्वान्गृहधर्मेनआगच्छेत् कृत्स्नंवेदमप्राप्यगार्हस्थ्यंनकुर्यादित्यर्थः नचत्यागेनपरिव्राजेनगच्छेतम्रियते एतच्चमनुनाप्युक्तं अनधीत्यद्विजोवेदान
नुत्पाद्यसुतानपि अनिष्ट्वाशक्तितोयज्ञैर्मोक्षमिच्छन्व्रजत्यधइति एतच्चाविरक्तविषयं ब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वावनाद्वायदहरेवविरजेत्तदहरेवप्रव्रजेदिति
श्रुतिविरोधात् १० नापिवेदग्रहणात्प्राक्संन्यस्येदित्याह नैवमिति दुःस्थितंस्थानंअनिकेतत्वमित्यर्थः वेदसंचयस्यापियत्ताभाह ऋचइतिबह्वृचानांसा
मगानांचाद्यजुर्वेदिनामप्यृचएवसंचयः साम्नांयजुषांचाप्यृक्ष्वेवांतर्भावइत्यर्थः ११ येचेति पुत्रिणोनस्युः गार्हस्थ्यंनचक्रुरित्यर्थः श्रुत्वावेदांतानितिशेषः
फलंज्ञानं १२ यस्येतिश्रुतंकर्मब्रह्मणोःश्रवणंनगृहीतंनानुष्ठितंयस्यश्रवणमनुष्ठानंचनास्तितंशूद्रतुल्यंराजाशूद्रकर्माणिकारयेत् १३ अथवेति अथवेति
पक्षांतरेयत्ब्राह्मणःसन्ब्रह्मवेदंनाद्रियेतइतियत्तन्नैवविद्यतेसर्वोपिब्राह्मणोवेदवानेवअन्यथाब्राह्मणत्वमेवतत्रनास्तीतिभावः तेनतस्यशूद्रसमीकरण-

नावेदविद्ब्रह्मन्नागच्छेन्नापिरौद्रव्रतंचरेत् नचत्यागेनगच्छेतगृहधर्मेनचत्यजेत् १० नैवंगच्छेतदुःस्थानमप्राप्तेवेदसंचयम् ऋचश्चसं
चयःपूर्वःसामगानांचभारत ११ येचापिपुत्रिणोनस्युःश्रुत्वापिप्राप्नुयुःफलम् ब्राह्मणास्तपसाश्रांतागुरोश्चपरिचर्यया १२ यस्यनैवश्रु
तंब्रह्मन्नगृहीतंविशांपते काममंतंधार्मिकोराजाशूद्रकर्माणिकारयेत् १३ अथवानैवविद्येतयद्ब्रह्मनाद्रियेद्द्विजः द्वाभ्यांतुश्रोत्रविषयेमनः
पूर्वंसमाहितम् १४ एवंसर्वेंद्रियारंभान्वेदपूर्वान्समाचरेत् ब्राह्मणोभूतिसंपन्नोयइच्छेद्भूतिमात्मनः १५ इतिश्रीमहाभारतेह-
रिवंशेभविष्यपर्वणिचतुर्विंशोऽध्यायः २४ वैशंपायनउवाच तेतुगोब्राह्मणानागाश्चंद्रादित्यपुरस्कृताः ब्राह्मणानूपूजय
न्देवान्वसुभिर्ब्रह्मसंभवैः १ नारदप्रमुखाश्चैवगंधर्वाऋषयोनृप कुर्वंतिसततंयज्ञेक्रमप्राप्तंपितामहम् २ वचोभिर्मधुराभासैःपंचें-
द्रियनिवासिभिः सर्वभूतप्रियकरैःसर्वभूतहितैषिभिः ३

राज्ञामप्रसक्तमेवद्वाभ्यांब्रह्मचारिगृहस्थाभ्यांश्रोत्रविषयेश्राव्येधर्मेब्रह्मणिचपूर्वमध्ययनाध्यायनकालेए
वमनःसमाहितंकृतंतस्मान्नब्राह्मणस्यावहेलनाराज्ञाकर्तव्येतिभावः १४ उपसंहरति एवमितियस्मादेवंतस्मात् भूतिर्विद्याभूतिंअपरोक्षज्ञानसंपदं १५ इतिश्रीहरिवं
शेभविष्य०टीकायांचतुर्विंशोऽध्यायः २४ एकोनविंशेश्रौतोपियज्ञःकामादिविधृतः तेनेशभक्तिरेवैकातमोहंत्रीतिगद्यते १ तेत्विति द्वयोःसंबंधः तेनारदादयःवैदिकमेवक
र्मश्रेयस्करंतदकरणेराजदंडश्चेतिजानंतः गोब्राह्मणाःगौर्वाक्विवेदप्रधानाइत्यर्थः नागाः नास्तिआगोविध्यपराधोयेषुतेनागाः रजःप्रकृतिभावाः स मासांतश्चदच्आर्षः
चंद्रादित्याभ्यांकालोलक्ष्यते दर्शपूर्णमासौपुरस्कृत्येत्यर्थः ब्राह्मणान्ब्रह्मभावान्देवानृषींश्चपूजयन्अपूजयन्अडभावआर्षः वसुभिःहविर्दक्षिणाभिःब्रह्मसंभवै
रितिब्रह्मैवब्रह्मणार्चितवंतइत्यर्थः १ क्रमप्राप्तंब्राह्मणपूजयाक्रमेणपितामहंब्रह्माणमपिअपूजयन्कुत्रयज्ञेपुत्रयज्ञेपुत्रपूजयापितुराल्हादोभवतीतितद्धृत् २ पंचें
द्रियाणिनिवासयंतिनिश्चलीकुर्वंतितैः ३

पंचभिरिंद्रियैः समाहितैरेकाग्रैः यज्ञं दृष्ट्वा ब्रह्मापि दिष्ट्या भाग्येन एवंविधा भवतां यज्ञे प्रवृत्तिरिति स्तव्यमिदं कर्मेत्यर्थः ४ ५ भवान् यक्ष्यते यक्षाः सुराश्च यक्ष्यं-
ते प्रतिगुणैः स्वस्वगुणा सात्त्विकराजसतामसा वा प्रतिगुणास्तैः स्वस्वाभिप्रायेणेत्यर्थः ६ एवं क्रतौ प्रवृत्ते आध्यात्मिकाः देवासुराः शमकामादयो मिथः स्पर्धमा-
ना आसन् ते पुशमादिभिस्तत्तदिंद्रियकर्मणा स्तोत्रपाठादिना सुरान् जेष्याम इत्यध्यवसितैः सुरैः वागादिमनअंतानि सर्वाणींद्रियाणि पापविद्धानि कृतानि अत एव तेषां
सुभांसुभविषयप्रकाशकत्वमविशेषेण दृश्यते ततः प्राणाख्यं सूत्रात्मानं देवाः श्रितवंतस्तेन सर्वे कामादयो निहता इत्ययमर्थो द्वया ह प्राजापत्या देवाश्चासुराश्च तत्र-
कानीयसा एव देवा ज्यायसो सुरास्त एषु लोकेषु स्पर्द्धंत इत्यादिना बृहदारण्यके दर्शितस्तमुपबृंहयति वयमिति ७ ८ विप्रैर्निरोद्धुमशक्याः द्विविधाः अपि वृत्त
इत्यर्थः ९ प्रयुद्धाः प्रकृष्टं युद्धं येषां ते ततो यज्ञं विहाय प्राणोपास्तौ प्रवृत्तेष्वपि तेषु सर्वे प्राणजयैषिणः अभूवन् सर्वशः भाशः भैंद्रियवृत्तिरूपाः सुरासुराः प्राणं सूत्रा

स्तूयमानश्च यज्ञांते पंचेंद्रियसमाहितैः प्रोवाच भगवान्ब्रह्मा दिष्ट्या दिष्ट्येति भारत ४ ततः कश्यपमाभाष्य प्रोवाच भगवान् प्रभुः भवानपि-
सुतैः सार्द्धं यक्ष्यते वसुधातले ५ क्रतुभिः परमप्राप्तैः संपूर्णवरदक्षिणैः यक्षासुराश्च ते सर्वे यथाप्रतिगुणैः प्रभो ६ वयं यक्षामहे पूर्वं पूर्वं यक्षा
महे वयम् एवमन्योन्यसंरंभाद्विघ्नंते बलदर्पिताः ७ दैतेयाश्चाप्यदैतेयाः परस्परजयैषिणः युद्धायैव प्रतिष्ठंति प्रगृह्य विपुलौ भुजौ ८
निवार्यमाणा ऋषिभिस्तपसा दग्धकिल्बिषैः अन्यैश्च विविधैर्विप्रैर्वेदवेदांगपारगैः ९ निवार्यमाणा युद्ध्यंते वृषभा इव गोकुले प्रयुद्धारंभ
संक्रांताः सर्वे प्राणजयैषिणः १० पश्यतां सर्वभूतानां मृत्योर्विषयमागताः ततः शब्देन महता परं क्लामहाबलाः ११ रुंधंति बाहुभिः क्रु-
द्धाः सपक्षा इव पक्षिणः चचाल वसुधा चैव पादाक्रांता चरोचिभिः १२ नौर्यथा पुरुषाक्रांता निषीदति महाजले पर्वताश्च विशीर्यंते न-
द्यो नागजा इव १३ चुक्षुभुश्च महानद्यस्ताडिता मातरिश्वना ततः समभवद्युद्धं मधो विष्णोश्च भारत १४ युगांतकरणं घोरं सर्वप्राणिभयं-
करम् प्रममाथ बलं विष्णुः समग्रं बलपौरुषम् १५ वन्हेरिव बलं दीप्तं शमयत्यंबुना यथा तथा प्रशामितं तेन भगवत्यपकारिणा १६ इ-
ति श्रीमहा॰ हरि॰ भवि॰ पंचविंशोऽध्यायः २५ ॥ ॥

त्मानं जेतुमैषितवंतः तावत्तेव सर्वेपि नष्टाः पाषाणं प्राप्यैव पांसुपिंडाः १० ततइति परं बाह्येंद्रियवृत्तिसमूहं कृत्वा कर्त्तित्वा छित्वा रुंधंति मन इति शेषः शब्देन शाब्दज्ञानजेन विवेकेन बाहुभिर्वा तुल्यैर्वैराग्यादिभिः ११ तत्रापि पूर्वोक्तो रजस्तमोरूपो विघ्न उपस्थि-
त इत्याह चचालेति वसुधा योगभूमिः सत्वापत्याख्या रोचिभिः विषयवासनाज्वालाभिः १२ पर्वताः पर्वततुल्याः आसनबंधादयः १३ नद्यो नद्यः मातरिश्वना प्राणवा-
युना सूत्रभावाद्दुस्थितो बभूवेत्यर्थः १४ ततइति एवं विक्षिप्तं चित्तं पुनर्निरोध्यमानं सत् मधुनामा मनो लयं प्राप्नोति स च सत्वाख्येन विष्णुना प्रतिहंतव्य इत्यर्थः
युगांतः संसारांतः १५ बलं निद्रांतं द्राज्याडयकषायागमर्हादि १६ इतिश्रीमहाभारते हरिवंशे भविष्यपर्वणि टीकायां पंचविंशतितमोऽध्यायः २५ ॥ ॥

तमसादेहनिगडे क्षिप्तमात्मानमुत्तमः उद्धरेत्सत्वसामर्थ्यादितिविशेषोनिरूप्यते १ मधुःआसुरोभावः मोहः पाशैः वासनामयैः महेंद्रंआत्मानंपर्वतांतरे देहमध्ये १
नमितिसतंबबंधेतिपूर्वेणान्वयः प्रन्हादवचनात् प्रन्हादोप्रहर्षः तदनुसारित्वाद्विषादाख्यस्यलयस्येतिभावः लक्षणंचयोगिनःपूर्णसत्वराहित्यंतदभिज्ञश्च मोहःइं
द्रस्यात्मनोबुद्धिसंक्षयात्भविष्यद्वैतादर्शनरूपमैश्वर्यमाकांक्षन् सुषुप्तौनिर्विकल्पावस्थासदृशायांपातयिष्यन् इत्यर्थः २ बध्वेति युग्मंमर्मविवर्जितैः भेद
स्थानरहितैरभेद्यैरित्यर्थः अतएवआयसैरिवदृढैःविदारणैःअंतर्दुःखदैः ३ ४ द्वैधीभूताइतिप्रोक्तंद्वयाहप्रजापत्याद्यर्थमाह गंधर्वादयोरजःप्रधाना
मधोर्मोहस्यमनोधुन्वंतिविस्फारयंति ५ ६ ७ मधुनस्तमसःप्रयस्यैवयस्ययोनिर्ब्रह्मैवेत्यर्थः राजस्यापिप्रकृतिस्तमोमूलिकैवेतिभावः ८ तत्रे-

वैशंपायनउवाच बलवान्सतुदैतेयोमधुर्भीमपराक्रमः बबंधपाशैर्निशितैर्महेंद्रंपर्वतांतरे १ तंवैप्रन्हादवचनात्लक्षणज्ञश्चप्रभा
रत ऐश्वर्यमैंद्रमाकांक्षन्भविष्यबुद्धिसंक्षयात् २ बध्वेंद्रंसहसामध्येपाशैर्मर्मविवर्जितैः आयसैर्बहुभिश्चित्रैर्बलवद्भिर्विदारणैः ३
विष्णुमेवाग्रणीरुद्रमाव्हययुद्धकोविदः मृधेगणानांसर्वेषांकालस्यवशमागतः ४ द्वैधीभूताःकश्यपेयामधोर्वशमुपागताः युद्धार्थम
भ्यधावंतप्रगृह्यविपुलागदाः ५ गंधर्वाःकिंन्नराश्चैववाद्येगीतेचकोविदाः प्रनृत्यंतिप्रगायंतिप्रहसंतिचसर्वशः ६ तंत्रीभिःसुप्रयु
क्ताभिर्मधुराभिःस्वभावतः मनोमधोर्विधुन्वंतियुध्यमानस्यरागिणः ७ मधोर्बलार्थंमधुनोनियोगात्पद्मयोनिनः एतान्विकारान्कु
र्वंतिगंधर्वाःसत्यवादिनः ८ तत्रशक्तोहिगांधर्वेतस्मिन्शब्देमधुर्मनः दानवाश्चासुराश्चैवप्रत्यक्षंयातिप्राणदन् ९ मधोश्चमनआक्षिप्य
पश्यन्योगेनचक्षुषा मंदरंप्रपतेविष्णुर्गूढोग्निरिवदारुषु १० ऋषयोदीप्तमनसःकिंचिद्व्यथितमानसाः पितामहंपुरस्कृत्यक्षणेनांतरधीय
त ११ विष्णुस्सोभ्यहनत्क्रुद्धोमधुर्मधुनिभेक्षणः भुजेनशंखदेशांतेनचकंपेपदात्पदम् १२ विष्णुश्चाभ्यहनत्दैत्यंकराग्रेणस्तनांतरे स
पपातमहींतूर्णंजानुभ्यांरुधिरंवमन् १३ नचैनंपतितंहंतिविष्णुर्युद्धविशारदः बाहुयुद्धेहिसमयंमत्वाचिंत्यपराक्रमः १४ इंद्रध्वजइवो
त्तिष्ठन्जानुभ्यांसमहीतलात् मधूरोषपरीतात्मानिर्दहन्निवचक्षुषा १५ परुषाभिस्ततोवाग्भिरन्योन्यमभिगर्जतुः समीयतुर्बाहुयुद्धेप
रस्परवधैषिणौ १६ उभौतौबाहुबलिनावुभौयुद्धविशारदौ उभौचतपसाशांतावुभौसत्यपराक्रमौ १७ दृढप्रहारिणौवीरावन्योन्यंविच
कर्षतुः शैलेंद्राविवयुद्ध्यंतौपक्षैःपाषाणसन्निभैः १८ विकर्षंतौवमंतौचअन्योन्यंवसुधातले गजाविवविषाणाग्रैर्नखाग्रैश्चविचेरतुः १९

तिप्राणदन्मधुस्तत्रगांधर्वेमनोदधावितिशेषः ९ आक्षिप्यआसमंतात्विषयेषुक्षिप्त्वास्वस्यापसरणेनसत्वंप्रयतेप्रगच्छतितिरोबभूवेत्यर्थः १० ऋषयोःमंत्रास्तज्ज्ञा
नानिपितामहंपरमात्मानंअंतरधीयतअंतर्हिताबभूवुःएकवचनमार्षं ११ विष्णुमित्यादिनाविष्णुदैत्यरूपकेणविवेकमोहयोर्युद्धमाह एकादशभिः १२ १३ १४ १५
१६ १७ १८ १९

२० २१ २२ सुश्रुवुरिति अथभूतानिपुष्करेताःस्तुतिःसुश्रुवुरितियत्तच्छब्दाध्याहारेणयोज्यम् २३ शरीरमिति अनात्मनिदेहादावात्माभिमानोविद्याख्योमोहः तन्नाशायात्मानात्मनोर्विवेकायस्थूलात्पिविनक्तिधातवस्तेजोबन्धानितेषांसंयुक्तंसंयोगःशरीरंतत्रमलपिंडतुल्येचैतन्यंनसंभावितमितिततःपृथग्भूतेनचेतनेनान्वितमितिवक्तव्यं तच्चचेतनंब्रह्मैवतेजोभूतंचिन्मात्रंइंद्रियैर्युक्तंजीवइतिशेषः २४ एवंजीवस्यब्रह्मभावमुक्त्वादेहस्यापितमाह ध्रुवमिति तेदेहारंभकाःभूतेसूक्ष्मेकारणेध्रुवंनिश्चितंतिष्ठंति प्रलयतांप्रलयाधिष्ठानतांगते पुनश्चसूक्ष्ममेवानेकधाबहुरूपंभूत्वापुनश्चोद्भवते अयंभावः शब्दप्रत्यकूटङ्मात्रमेवानिर्वचनीयमायामनइंद्रियादिभिःसूक्ष्मस्थूलस्थूलतरैःशबलपराग्दृश्यरूपेणमुकुरेमुखमिवनैधावभातितत्रांतस्योपाधेःपूर्वस्मिन्लयेलोचनोत्तेजनाक्षरन्यायेनस्थूलतरंस्थूलरूपेणैवावशिष्यतेएवंस्थूलमपिसूक्ष्मरूपेणतदपिमायापगमेचिन्मात्रेणेतियुक्तेसर्वस्यब्रह्ममात्रत्वमिति २५ प्रबोध्येति

ततोव्रणमुखैस्तेषांवैवसुस्त्रावरुधिरंबहु ग्रीष्मांतेधातुसंसृष्टंशैलेभ्यइवकांचनम् २० संसिक्तौरुधिरौघैश्चस्त्रवद्भिःसमरंजितौ अथोद्यतैःपदाघैश्चतौव्यदारयतांमहीम् २१ अभिहत्यतुतौवीरौपरस्परमनेकधा पतंगविवयुध्येतांपक्षाभ्यांमांसगृद्धिनौ २२ सुश्रुवुश्चांतरिक्षेथसर्वभूतानिपुष्करे सिद्धानांवदनोन्मुक्ताःपरयावर्णसंपदा २३ स्तुतयोविष्णुसंयुक्ताःसत्याःसत्यपराक्रमे शरीरंधातुसंयुक्तंसंयुक्तंचेतनेनच २४ तद्ब्रह्मइंद्रियैर्युक्तंतेजोभूतंसनातनम् ध्रुवंतिष्ठंतिभूतास्तेसूक्ष्मेप्रलयतांगते २५ पुनश्चोद्भवतेसूक्ष्मंबहुरूपमनेकधा प्रबोध्यभावंभूतानांत्रिषुलोकेषुकामदः २६ स्वरूपोबहुरूपांस्तांल्लोकान्संचरतेवशी मानसींतनुमास्थायबहुभिःकारणांतरैः २७ योगात्माधारयन्नुर्वीनागात्मानंदिवंधरः ब्रह्मभूतंपरंचैवसूक्ष्मेणात्मानमीश्वरः २८ ब्राह्मेणविप्रान्वसतियुद्धेनैवचक्षत्रियान् प्रदानकर्मणावैश्यान्शूद्रान्परिचरेणच २९ गावःक्षीरप्रदानेनअश्वान्यज्ञेषुप्रोक्षणैः पितरश्चोष्मणैवेदहविर्भागेनदेवताः ३०

त्रिषुलोकेषुकारणसूक्ष्मस्थूलरूपेषुभूतानांभावंस्वरूपंप्रबोध्यतानेवलोकान्स्वरूपचैतन्येनाभिव्याप्यवशीअसंगआत्माचरतेभुंक्तेकर्मव्यत्तिहारेतःलोकात्मानोपरस्परंभुंजानेपालयतइत्यर्थः २६ मानसमितिसाद्र्श्लोकएकंवाक्यं २७ ईश्वरःसूक्ष्मेणरूपेणआत्मानंधारयन्चरतेइतिपूर्वेणान्वयःकिंकृत्वाबहुभिःकारणांतरैःदुष्टनिग्रहसाधुसंरक्षणादिभिःनिमित्तैःमानसींतनुंशेषकूर्मादिरूपआस्थाय कीदृशईश्वरःयोगात्माकीदृशमात्मानंशेषनागरूपं दिवंधरःद्युलोकस्यधर्ता ब्रह्मवेदंभूतंचचतुर्विधंपरंचपंचविधंभूतंधार्यधारकश्चात्मैवेत्यर्थः २८ ब्राह्मेणवेदमयेनरूपेणविप्रानधिष्ठायवसति सर्वत्रभगवानितिशेषः शेषंस्पष्टं २९ गाःअधिष्ठायक्षीरप्रदानेनवःयुष्मान्यानियज्ञेषुअश्वान्यज्ञियद्रव्याणिअधिष्ठायप्रोक्षणैःफलामृतसेकैश्चवःपांति पितरःपितॄन्उष्मणाश्रप्यमाणहविर्बाष्पेण उष्मभागाहिपितरइतिश्रुतेः ३०

यत्ससान्नानिमेधयातपसाजनयत्पिता एकमस्यसाधारणं द्वे देवानभाजयत्त्रीण्यात्मनेऽकुरुत पितृभ्यः एकंप्रयच्छदितिससान्नंब्राह्मणार्थंसंगृण्हातिचतुर्भिरिति
धातुभिः दर्शपूर्णमासपिंडपितृयज्ञसाधारणांतैः त्रिभिर्मनोवाक्प्राणैः एवंसप्तभिरन्नैः पितृभिः सहत्रीँल्लोकान्परिरक्षति किंभूतैः सप्तभिः नित्यैः अकरणेप्रत्यवा
यकरैः ३१ चंद्रेति एतत्सप्तकंचंद्रसूर्यात्मकंयथात्मकंयथायोगंप्रकाशंअर्चिरादिमार्गरूपंअप्रकाशंधूमादिमार्गरूपं निहतः संकटे पातितआत्मायेनतत् स्वेन-
तेजसाचित्प्रकाशेननिगूढंव्याप्तंचसप्तकम् ३२ एतदेवविभजंते त्रयोमनोवाक्प्राणाः पितरइत्यनेनस्पष्टभेदमेषामाह निगृहीताएतेऽनावृत्तिफलंअर्चिरादि
मार्गंवर्द्धयंतिअन्योन्यमित्यर्थः ३३ एतदेवाह त्रयइतितेपूर्वोक्तास्त्रयः पितृगणानित्यंनियमेनपश्चात्फलभोगांतेपिंडान् स्थूलसूक्ष्मकारणदेहान् अदंतिसंहरंति
मनोवाचंप्राणंतान्यात्मनेकुरुतइतिश्रुतेः उपासिनाः मनोवाक्प्राणाः अवश्यंक्रमेणआत्मनोमुक्त्यैप्रभवंतीत्यर्थः अन्येपितृगणास्तुउक्तादर्शादयः सिद्धाः शरीराकार-

चतुर्भिर्व्यतिरिक्तांगैस्त्रिभिरन्यैश्च धातुभिः सप्तभिः पितृभिर्नित्यैस्त्रीन्लोकान्परिरक्षति ३१ चंद्रसूर्यात्मकंनित्यंतद्रूपनिहतात्मकम् प्र
काशंचाप्रकाशंचनिगूढंस्वेनतेजसा ३२ त्रयस्तुपितरोनित्यंवर्द्धयंतिदिवाकरम् चतुर्भिः पितृभिश्चैवचंद्रोवर्द्धतिमंडले ३३ त्रयः पितृ-
गणानित्यंपिंडान्पश्चाद्ददंतिते चत्वारोन्येपितृगणाः सिद्धाः पंचकआददे ३४ त्वमेवपंचतान्धर्मांस्त्वमेवापंचतान्विभो सनातनमयो-
द्व्यः शाश्वतोब्रह्मसंभवः ३५ तस्मात्ततेजआदत्तेअग्निर्वायुश्चसर्वशः अतस्त्वंकर्मणातेनआदित्यः समपद्यत ३६ यदस्मासिजगत्सु
र्वैरश्मिभिः प्रदहन्निव युगांतकालेसंप्राप्तेपरांसिद्धिमुपागतः ३७ पक्षसंधावमावास्यांलोकंचरसिमानुषम् ऋषिभिः सहगूढात्मासूर्ये
दुवसुसंभवैः ३८ सफलंकर्मकुर्वाणंयजतांपुष्टिवर्द्धनम् हेतुनामविकारायमाभूत्कर्मविपर्ययः ३९ वानस्पत्यौषधीश्चैवयुगपत्प्रतिपद्य
से बाल्यभावायवसुधांपक्षेपक्षेजनीस्त्वं ४० भूतानांभूविभूतेशाभाव्यर्थवसुधातले वसुयद्भुविकिंचिच्चसर्वतत्त्वमयंविभो ४१

परिणताः पंचविषयादयो भवंतिकेतेयान् कः प्रजापतिर्यजमानः आददेआत्मत्वेनस्वीकृतवान् दर्शादिफलं देहांतरप्राप्तिरेवनित्येत्यर्थः ३४ त्वमेवपंचतान्वि-
यदादीन्धर्मान्कनकमिवकुंडलादीन् ३५ तस्मादिति आदीयतेन्यैरग्न्यादिभिः स्वप्रयत्नायेत्यादित्यः सूर्यवत्प्रकाशकः ३६ प्रकारांतरेणादित्यपदार्थमाह
यदिति आदानादादित्यइत्यर्थः आदत्सीतिपरस्मैपदंआदातुः स्वर्गादिफलाभावात् ३७ पक्षसंधौपूर्णिमायांअमावास्यांअमावास्यायां ३८ हेतूनांस्व
र्गादिसाधनानांकर्मणांअविकारायतमेवाह माभूदितिकालत्वोपेनधर्मेवैफल्यंमाभूदित्यर्थः ३९ वनस्पतीतिओषधीर्वनस्पतींश्चदर्शेवसुधांचपृथिवींचंद्र
रूपेणप्रतिपद्यतेबालभावायपुनरुत्पत्तये ४० भूतानामतीतानांभाविनांअनागतानांच अर्थैप्रश्नयैर्यात्किंचिद्वसुतत्सर्वंत्वन्मयमेव ४१ ७ ७

